॥ श्रीः ॥

ॐ नमः परमात्मने ।

श्रीरामानुजाचार्यविरचितस्य

# श्रीभाष्यस्य भूमिका ।

ब्रह्ममीमांसापरपर्यायं शारीरकमीमांसाशास्त्रं[1] केनचिदद्वैतपरतया[2] केनचिच्छुद्धाद्वैतपरतया द्वैताद्वैतपरतया वा[3] केनचिद्विशिष्टाद्वैतपरतया[4] केनचिच्छक्तिविशिष्टाद्वैतपरतया[5] केनचिद् द्वैतपरतया[6] केनचिद्ब्रह्मपरतया केनचिद्विष्णुपरतया केनचिच्छिवपरतया केनचित्सूर्यपरतया केनचिद्गणेशपरतया केनचिच्छक्तिपरतया एवं बहुभिराचार्यैरनेकैः प्रकारैर्यथायथं भाष्यरूपेण वृत्तिरूपेण टीकारूपेण व्याख्यातमिति सुविदितमस्ति विदुषाम् ।

---

(१) "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति" रामानुजाचार्याः श्रीभाष्यारम्भे निरूपितवन्तः । पृ० २ पं० १३ अस्मिन्नेव मुद्रिते पुस्तके ।

(२) श्रीशङ्कराचार्येण ।

(३) श्रीविष्णुस्वामिना तदनुयायिभिर्वा इति केचित् । सम्प्रदायविदस्तु तद्ग्रन्थालाभे न निश्चयो भवितुमर्हतीति वदन्ति ।

(४) श्रीरामानुजाचार्येण ।

(५) श्रीकण्ठशिवाचार्येण ।

(६) श्रीमध्वाचार्येण ।

तेषु श्रीरामानुजाचार्यविरचितं श्रीभाष्यं प्रसन्नगम्भीरं विशिष्टाद्वैतपरं सरलरीत्या सूत्रार्थबोधकमुपनिषदनुकूलमिति बहूनां टीकाकाराणामनुवादकानामपि सम्मतमिति वेदान्तदर्शनानुरागिणां सर्वथैवोपादेयमिति मत्वाऽनेके तत्पठनपाठने प्रवृत्ताः। इदं च कार्यं परिशुद्धपुस्तकप्राचुर्यं विना न सम्भवतीति दक्षिणदेशे वङ्गदेशे वाराणस्यादावपि सटीकानि मूलानि टिप्पणसहितानि बहूनि पुस्तकानि मुद्रितानि प्रकाशितानि किन्तु यथा पठनादिकार्ये परिशुद्धं पुस्तकमपेक्षितमुपयुक्तं च तथा न टीकया टिप्पण्यादिना वा विचित्रितमिति बहुभिः प्रोत्साहितः पादरीश्रीयुक्तजानसनमहाशयः (Revd J J Johnson, M A) बद्धपरिकरो वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालयादिभ्योऽनेकानि श्रीभाष्यस्य हस्तलिखितपुस्तकानि मुद्रितान्यपि छित्राणि तद्भाष्यपुस्तकानि समाकलय्य तर्कतीर्थोपाधिधारिणा महामहोपाध्यायश्रीहेमचन्द्रकैलासचन्द्रभट्टाचार्यशिरोमणिच्छात्रेण श्रीबटुकनाथशास्त्रिणा महामहोपाध्यायेन वेदान्त-सांख्य-योग धर्मशास्त्र-साहित्याचार्योपाधिधारिणा वाराणसीस्थराजकीयसंस्कृतपाठशालीयाध्यापकेन श्रीभागवताचार्येण च संशोधनकार्यं विधाप्य श्रेष्ठादर्शोपलब्धपाठान्तराणि च यथास्थानं सन्निवेश्य सटीकं श्रीभाष्यं काशीविद्यासुधानिधिपत्रे एकवारं मुद्रितमपि तदध्यक्षाभ्यर्थनया पुनरपि मूलमात्रं मुद्रापितवान्।

श्रीरामानुजाचार्येण स्वकपोलकल्पनया न ब्रह्मसू-

आणि व्याख्यातानि किं तु बोधायनवृत्त्यनुसारेण पञ्च-रात्रागमानुसारेणैव पञ्चरात्रमतं वा भागवतमतं तु शङ्कराचार्यसमयादपि बहुपूर्वकालवर्त्ति इत्यत्र तु सन्देह एव नास्ति एतदेव सूचितं २ अध्यायस्य ४ पादे अन्तिमसूत्रव्याख्यानेषु तथाहि परमात्मा वासुदेवानिरुद्धप्रद्युम्नसङ्कर्षणात्मकचतुर्व्यूहद्वाराऽऽत्मानं प्रकाशयति अत्र वासुदेवः परमात्मा सङ्कर्षणो जीवात्मा प्रद्युम्नो मनः अनिरुद्धोऽहङ्कारः अयमेव सिद्धान्तो रामानुजाचार्याणाम् । शङ्कराचार्यास्तु इदं सर्वं पूर्वपक्षत्वेन वदन्ति । रामानुजाचार्यमते जीवो वास्तविकः स्वतन्त्रो ब्रह्मभिन्नः पदार्थः सांसारिकं सर्वं दुःखं त्यक्त्वा परमात्मभक्त्या स्वर्गं गत्वा अनन्तकालमानन्दमनुभवतीत्ययमेव मोक्षः। शाङ्करमते गुणातीतमेकं सत्यं ज्ञानमानन्दं ब्रह्म जीवस्तु न वास्तविकः कश्चित्पदार्थः किन्तु मायया परिच्छिन्नं ब्रह्मैव जीवात्मनः ज्ञानेन मायानाशात् परमात्मजीवैक्यज्ञानान्मोक्ष इति । शाङ्करमते पराविद्याप्रतिपाद्यं परं निर्गुणं ब्रह्म अपराविद्याप्रतिपाद्यमपरं सगुणं ब्रह्म ईश्वरापरपर्यायम् । रामानुजमते एकैव विद्या ब्रह्माऽपि एकमेव अत्रैवोपनिषत्तात्पर्यमित्यादि बोध्यम् ॥

"भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः सञ्चिक्षिपुस्तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते ।" इति श्रीरामानुजाचार्येण श्रीभाष्यारम्भ[1] एव प्रतिपादनादनेकैरेव बोधायनवृत्त्यनुसारेण

(१) मुद्रितश्रीभाष्ये पृ १ पं १४ ।

ब्रह्मसूत्राणि व्याख्यातानि[1] परं श्रीरामानुजाचार्येण तथा परिनिष्ठितप्रकारेण सूत्राणि व्याख्यातानि तदुक्ताः पदार्थाश्च तथा निरूपिता यथा न केनापीति वेदादिभाष्यकर्तृभिः श्रीमाधवाचार्यैः सर्वदर्शनसंग्रहे त्रिदण्डिवेदान्तिमतापरपर्यायं विशिष्टाद्वैतमतं रामानुजदर्शनत्वेन पृथङ्निर्दिष्टमिति ।

श्रीशङ्कराचार्येण अस्या एव बोधायनवृत्तेस्तत्र तत्र खण्डनं कृतमिति वदन्ति केचित् तन्न यतो बृहदारण्यकोपनिषद्भाष्यारम्भे[2] "तस्या इयमल्पग्रन्था वृत्तिरारभ्यते" इति । अत्रानन्दगिरिः शाङ्करभाष्यटीकायाम् "एतेन चिकीर्षिताया वृत्तेर्भर्तृप्रपञ्चभाष्येणागतार्थत्वमुक्तम् ।" "वृत्तिशब्दो भाष्यविषय" इति ।

इति भर्तृप्रपञ्चनामिका काचिदन्या वृत्तिः[3] अपि च बोधायनवृत्तिमवलम्ब्य व्याख्यातॄणां श्रीरामानुजाचार्याणां मते विषमसमुच्चयो[4] मोक्षसाधनम् भर्तृप्रपञ्चदृश्यनुसारिणां मते समसमुच्चयो[5] मोक्षसाधनम्

(१) महामहोपाध्यायश्रीरामभिश्रशास्त्रिणा "टङ्क–द्रमिड–गुहदेव–भारु-च्यादय आचार्याः" इति श्रीभाष्यभूमिकायां निरूपितम् ।

(२) बङ्गदेशस्थ–एशियाटिक् सोसाइटीसभाद्वारा मुद्रिते पुस्तके पृ २ पं. १५

(३) अन्या अपि प्राचीना ब्रह्मसूत्रवृत्तय आसन् यतः शङ्कराचार्येण ३ अध्याये ३ पादे एक आत्मनः शरीरे भावात् ५३ सूत्रव्याख्याने भगवता उपवर्षेण ब्रह्मसूत्रवृत्तिः कृतेति निरूपितम् । एवं गौडपादाचार्येणापि कारिकारूपा वृत्तिः कृतेति श्रीवेङ्कटमुद्रितनिम्बार्काचार्यभाष्यभूमिकायां द्रष्टव्यम् ।

(४) ज्ञानसमुच्चितकर्मणो मोक्षसाधनत्वम् उपासनायाः प्राधान्यमिति तेषां हृदयम् ।

(५) कर्मसमुच्चितज्ञानस्यैव मोक्षसाधनत्वेऽपि न कर्मणां परित्याग इति तेषां हृदयम् ।

शक्तिपदार्थव्यवस्थापनेऽपि मतभेदो वर्तते[1] इति द्वित्त्वयं न चैक्यमिति ।

यत्तु रामानुजाचार्येण शङ्कराचार्यस्य मतं खण्डितं तत्तु शाङ्करमते यानि यानि उपनिषद्वाक्यानि सिद्धान्तात्मकानि तान्येव रामानुजमते पूर्वपक्षात्मकानि यानि च शाङ्करमते पूर्वपक्षात्मकानि तान्येव रामानुजमते सिद्धान्तात्मकानीति एतदनुसारेणैव परस्परं विवादः प्रचलितः । श्रीरामानुजाचार्यानन्तरं पञ्चपादिकाविवरणकारैस्तट्टीकातत्त्वदीपनकारैरपि त्रिदण्डिवेदान्तिमतखण्डनपूर्वकं शाङ्करमतं सुव्यवस्थापितम् । तदनन्तरं श्रीभाष्यटीकाश्रुतप्रकाशिकाकारैः श्रीसुदर्शनाचार्यैः श्रुतप्रकाशिकायां शाङ्करमतखण्डनपूर्वकं रामानुजमतं सुव्यवस्थापितम् तदनन्तरं वेदान्तकल्पतरुपरिमलग्रन्थे अप्पयदीक्षितेन यथा रामानुजमतापरपर्यायं विशिष्टाद्वैतमतं वा त्रिदण्डिवेदान्तिमतं विखण्डितं शाङ्करं च मतं व्यवस्थापितं शाङ्करं भाष्यं च समुद्भासितं तथा नावशिष्टं किमपि दृश्यते[2] । एतेषां ग्रन्थानां निदर्शनरूपेण तत्तदंशोद्धारे एषा लघ्वी भूमिका विस्तृतं महद्ग्रन्थान्तरं भवेदिति वेदान्तविदुषां न किञ्चिद्दुरूहं प्रच्छन्नमस्तीत्युपरम्यते ।

---

(१) चौखम्बासंस्कृतसीरीजमुद्रिते अद्वैतसिद्धिसिद्धान्तसारपुस्तके भूमिकायां महामहोपाध्यायश्रीमल्लक्ष्मणशास्त्रिद्राविडपादैर्निरूपितम् ।

(२) यत्तु वाराणसीस्थैः परमहंसपरिव्राजकाचार्यैः श्रीविशुद्धानन्दस्वामिभिः कथितमेतद्भूमिकाया प्रतिपादित परिमलग्रन्थस्य व्याख्यानं षट्पदसञ्ज्ञकमस्यापि व्याख्यानमाभोगनामकमस्यापि गुञ्जारवनामकमित्यादि तत्र सेयमन्तिक पर्यासीदन्यत्रापीतीदानींपर्यन्तं निश्चयो न भवतीति विद्वद्भिरन्वेष्टव्यम् ।

श्रीमतां रामानुजाचार्याणामाविर्भावविषये तज्जीवनचरितविषयेऽपि अनेकैर्भारतवर्षीयै[१] र्यूरोपदेशीयै[२] रपि विद्वद्भिर्लोकश्रुत्या किंवदन्त्यादिना विज्ञापनपत्रे अनुवादपुस्तके भूमिकायामनेके कथानकाः लिखिताः श्रीराजेन्द्रनाथघोषमहाशयेन तु "आचार्यशङ्कर ओ रामानुज" इति नामके स्वरचिते ४६१ पृष्ठात्मके वङ्गभाषापुस्तके शङ्कराचार्येण समं रामानुजाचार्याणां तुलनैव कृतेति किमपरमवशिष्टं यदर्थमस्माभिः प्रयासः कार्यः । परं तु मम मते रामानुजदिग्विजयापरपर्याये प्रपन्नामृते ये ये विषया प्रतिपादितास्तेनोऽर्भिका इदानींतनेन केनचिदवगम्या न वेति प्रपन्नामृतमेवानुसर्तव्यम् तदनुसारेण श्रीमतां रामानुजाचार्याणां १२० मानुषवर्षपरिमितमायुः सञ्जातम् अपि च १०१२शाकवर्षे यादवाचलपर्वते नारायणमन्दिरस्थापनमिति तदाविर्भावसमयोऽप्यवगन्तव्य इति रहस्यम् । विशेषजिज्ञासूनां कृते प्रपन्नामृतस्य संक्षेपः मदर्श्यते । तथाहि प्रपन्नामृताख्यो ग्रन्थः ६० अध्यायात्मकः तत्र १-२ अध्याययोः पूर्वसमुद्रोपकण्ठे योजनत्रयव्यवहिते तोण्डीरमण्डले भूतपुरीनगरे हारीतान्वयस्य केशवाभिधब्राह्मणस्य गृहे शेषो लक्ष्मणश्चैत्रे मासे शुक्लपक्षे पञ्चम्यां पुंस्त्वेनावतीर्णो रामानुजाख्यां समधिजगाम । तस्य च जातान्यसंस्कारस्य षोडशे वर्षे विवाहनिरूपणं तदनन्तरं पितुर्मरणं

---

(१) Govindâchârya. G. Bhandârkar, &c.

(२) G. Thibaut, &c.

काञ्चीपुरगमनं यादवनामकस्य पण्डितस्य समीपे शास्त्राध्ययनम्।

३-६ अध्यायेषु गोविन्दपण्डितेन विवादः। यामुनाचार्येण संन्यासिना परिचयः। श्रीभाष्यरचनाप्रतिज्ञा।

१०-१५ अध्यायेषु रामानुजस्य गृहस्थाश्रमत्यागत्रिदण्डधारणम्।

१६-२० अध्यायेषु रामानुजसिद्धान्तो वैष्णवदर्शनत्वेन ख्यातो भविष्यति।

२१-३३ अध्यायेषु रामानुजस्य शारदापीठगमनं तत्रत्यान् पण्डितान् विजित्य बोधायनकृतब्रह्मसूत्रवृत्तिपुस्तकमुपादाय रङ्गनगरं प्रति गमनम् तद्वृत्त्यनुसारेण श्रीभाष्य-वेदान्तदीप-वेदान्तसार-वेदार्थसंग्रह-गीताभाष्यप्रणयनं च।

३४-३६ अध्यायेषु दिग्विजयार्थं द्वारका-मथुरा-शालग्राम-साकेतनगर-बदरिकाश्रम-नैमिषारण्य-वृन्दावनादिगमनम्। पुरुषोत्तमक्षेत्रगमनं तत्र च मठस्थापनम्।

४४-४८ अध्यायेषु रामानुजस्य चित्रकूटगमनम् बौद्धानां पराजयवर्णनम् अथ भक्तनगरे शिष्यैः सह निवसतः भगवन्मूर्त्युद्धारार्थं स्वप्नदर्शनानन्तरं यादवाद्रौ गमनं १०१२ शाकाब्दे चैत्रशुक्लचतुर्दश्यां नारायणमूर्तिप्रतिष्ठापनम्।

४६-५६ अध्यायेषु रामानुजस्य चतुःसप्ततिसंख्यकेभ्यः शिष्येभ्यः विवरणप्रतिपादनम् रङ्गेश-वेङ्कटेश्वर-

वरद-सुन्दर-बकुलाभरण-नाथमुनि-यामुनाचार्य-वररङ्गादिप्रकाशितरामानुजविभववर्णनम् ।

६०-७५ अध्यायेषु बहूनां वैष्णवानां माहात्म्यकीर्तनम् । रामानुजाचार्यस्य १२० मानुषवर्षजीवित्वं माघशुक्लदशम्यां परमपदगमनमिति शम् ॥

छन्नारमगढ़र्नमैंटसंस्कृतकालेज-
सरस्वतीभवने ।
ता० २७ सेप्तेम्बर १८९५ ई०

विन्ध्येश्वरीप्रसादद्विवेदी ।





॥ श्रीः ॥

॥ ओं नमः श्रीमते भगवते रामानुजाचार्याय ॥

# अथ श्रीभाष्यं विशिष्टाद्वैतपरम् ।

---

## रामानुजदर्शनम् ।

### तत्र प्रथमोऽध्यायः ।

---

अखिलभुवनजन्मस्थेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुषी भक्तिरूपा ॥ १ ॥

पाराशर्यवचःसुधामुपनिषद्दुग्धाब्धिमध्योद्धृतां
संसाराग्निविदीपनव्यपगतप्राणात्मसञ्जीविनीम् ।
पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थिता-
मानीतां तु निजाक्षरैः सुमनसो भौमाः पिबन्त्वन्वहम् ॥२॥

भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुस्तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते ।

### अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अत्रायमथशब्द आनन्तर्ये भवति । अतःशब्दो वृत्तस्य हेतुभावे । अधीतसाङ्गसशिरस्कवेदस्याधिगताल्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्यानन्तस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ब्रह्मण इति कर्मणि षष्ठी "कर्तृकर्मणोः कृति" इति विशेषविधानात् । यद्यपि संबन्धसामान्यपरिग्रहेऽपि जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः, तथाप्याक्षेपतः प्राप्तादाभिधा-

निकस्यैव प्राधान्यात्कर्मणि षष्ठी गृह्यते। न च "प्रतिपदविधाना षष्ठी न समस्यते" इति कर्मणि षष्ठ्याः समासनिषेधः शङ्कनीयः, "कृद्योगा षष्ठी समस्यते" इति प्रतिप्रसवसद्भावात्। ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते। सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः। बृहत्त्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयं, सोऽस्य मुख्योऽर्थः। स च सर्वेश्वर एव। अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः। तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः, अनेकार्थकल्पनायोगाद् भगवच्छब्दवत्। तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः। अतः सर्वेश्वरो जिज्ञासाकर्मभूतं ब्रह्म। ज्ञातुमिच्छा=जिज्ञासा। इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह विधीयते। मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वादुपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्च पूर्ववृत्तात्कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति। तदाह वृत्तिकारः—"वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषा" इति। वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यम् "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः" इति। अतः प्रतिपाद्यविषयभेदेन षट्कभेदवदध्यायभेदवच्च पूर्वोत्तरमीमांसयोर्भेदः। मीमांसाशास्त्रम् "अथातो धर्मजिज्ञासा" इत्यारभ्य "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" इत्येवमन्तं सङ्गतिविशेषेण विशिष्टक्रमम्। तथा हि—प्रथमं तावत् "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनेनैव स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते। तच्चाध्ययनं किंरूपं कथं च कर्तव्यमित्यपेक्षायाम् "अष्टवर्षं ब्राह्मणमुपनयीत तम(१)ध्यापयेत्" इत्यनेन,

श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्॥

इत्यादिव्रतनियमविशेषोपदेशैश्चापेक्षितानि विधीयन्ते। एवं सत्कुलप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्याचार्योच्चारणानूच्चारणरूपमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते। अध्ययनं च स्वाध्या-

१ "तमध्यापयीत" इति पाठान्तरम्।

यसंस्कारः, "स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायस्य कर्मत्वावगमात् । संस्कारो हि नाम कार्यान्तरयोग्यताकरणम् । संस्कार्यत्वं च स्वाध्यायस्य युक्तम् । धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयतत्साधनावबोधित्वात्, जपादिना स्वरूपेणापि तत्साधनत्वाच्च । एवमध्ययनविधिर्मन्त्रवन्नियतयदक्षरराशिग्रहणमात्रे पर्यवस्यति । अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात् गृहीतात्स्वाध्यायाद्गम्यमानान् प्रयोजनवतोऽर्थानापाततो दृष्ट्वा तत्स्वरूपप्रकारविशेषनिर्णयफलवेदवाक्यविचाररूपमीमांसाश्रवणेऽधीतवेदः पुरुषः स्वयमेव प्रवर्तते । तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वाऽध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु चामृतत्वरूपानन्तस्थिरफलापातप्रतीतेस्तन्निर्णयफलवेदान्तवाक्यविचाररूपशारीरकमीमांसायामधिकरोति । तथा च वेदान्तवाक्यानि केवलकर्मफलस्य क्षयित्वं ब्रह्मज्ञानस्य चाक्षयफलत्वं दर्शयन्ति "तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते" "अन्तवदेवास्य तद्भवति" "नह्यध्रुवैः प्राप्यते ध्रुवं तत्" "प्लवा ह्येते अदृढा यज्ञरूपाः" "परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन, तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं, तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय, येनाक्षरं पुरुषं वेद सत्यं प्रो (१) वाच तां तत्त्वतो ब्रह्मविद्याम्" "ब्रह्मविदाप्नोति परम्" "न पुनर्मृत्यवे" "तदेकं पश्यति" "न पश्यो मृत्युं पश्यति" "स स्वराड् भवति" "तमेव विद्वानमृत इह भवति" "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" इत्यादीनि । ननु च साङ्गवेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वं स्वर्गादीनां च क्षयित्वं ब्रह्मोपासनस्यामृतत्वफलत्वं च ज्ञायत एव । अनन्तरं मुमुक्षुर्ब्रह्मजिज्ञासायामेव प्रवर्तताम् किमर्था धर्मविचारापेक्षा? एवं तर्हि शारीरकमीमांसायामपि न प्रवर्तताम्, साङ्गवेदाध्ययनादेव

१ प्रोवाच—प्रब्रूयादित्यर्थः ।

कारत्स्न्येन ज्ञातत्वात्। सत्यम्। आपाततः प्रतीतिर्विद्यत एव, तथापि न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चायकत्वादापाततः प्रतीतेरप्यर्थे संशयविपर्ययौ नातिवर्तेते। अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्य इति चेत्। तथैव धर्मविचारोऽपि कर्तव्य इति पश्यतु भवान्॥

ननु च ब्रह्मजिज्ञासायाः यदेव नियमेनापेक्षितं तदेव पूर्ववृत्तं किंचिद् वक्तव्यम्। न धर्मविचारापेक्षा ब्रह्मजिज्ञासायाः। अधीतवेदान्तस्यानधिगतकर्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः। कर्माङ्गाश्रयाण्युद्गीथाद्युपासनान्यत्रैव चिन्त्यन्ते। तदनधिगतकर्मणो न शक्यं कर्तुमिति चेत्। अनभिज्ञो हि भवान् शारीरकशास्त्रविज्ञानस्य। अस्मिन् शास्त्रेऽनाद्यविद्याकृतविविधभेददर्शननिमित्तजन्मजरामरणादिसांसारिकदुःखसागरनिमग्नस्य निखिलदुःखमूलमिथ्याज्ञाननिबर्हणायात्मैकत्वविज्ञानं प्रतिपिपादयिषितम्। अस्य हि भेदावलम्बि कर्मज्ञानं क्वोपयुज्यते, प्रत्युत विरुद्धमेव। उद्गीथादिविचारस्तु कर्मशेषभूत एव ज्ञानस्वरूपत्वाविशेषादिहैव क्रियते, स तु न साक्षात्सङ्गतः। अतो यत्प्रधानं शास्त्रं तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम्। बाढं, तदपेक्षितं च कर्मज्ञानमेव। कर्मसमुच्चितात् ज्ञानादपवर्गश्रुतेः। वक्ष्यति च—"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति। अपेक्षिते च कर्मज्ञाने केन समुच्चयः केन नेति विभागो न शक्यते ज्ञातुम्। अतस्तदेव पूर्ववृत्तम्। नैतद्युक्तम्, सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवाविद्यानिवृत्तेः। अविद्यानिवृत्तिरेव हि मोक्षः, वर्णाश्रमविशेषसाध्यसाधनेतिकर्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेः कथमिव साधनं भवेत्। श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरोधित्वं ज्ञानस्यैव मोक्षसाधनत्वं च दर्शयन्ति। "अन्तवदेवास्य तद्भवति" "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" "ब्रह्मविदाप्नोति परम्" "ब्रह्म वेद ब्रह्मैव भवति" "तमेव विदित्वाऽतिमृत्युमेति" इत्याद्याः। यदपि चेदमुक्तं—यज्ञादिकर्मापेक्षा विद्येति, तद् वस्तुविरोधाच्छ्रुत्यक्षरपर्यालोचनया चान्तःकरणनैर्मल्यद्वारेण विविदिषोत्पत्तावुपयुज्यते, न फलोत्पत्तौ।

"विविदिषन्ति" इति श्रवणात् । विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाह "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति। तदेवं जन्मान्तरशतानुष्ठितानभिसंहितफलविशेषकर्मसंस्कृतकषायस्य विविदिषोत्पत्तौ सत्यां "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयम्" "सत्यं ज्ञानमनन्तं ब्रह्म" "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "अयमात्मा ब्रह्म" "तत्त्वमसि" इत्यादिवाक्यजन्यज्ञानादविद्या निवर्तते । वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि । श्रवणं नाम वेदान्तवाक्यानामैक्यविद्याप्रतिपादकानीति तत्त्वदर्शिन आचार्यात्स्वयं युक्त्यार्थग्रहणम् । एवमाचार्योपदिष्टस्यार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम् । एतद्विरोधिदेहादिभेदवासनानिरसनायात्मार्थस्यानवरतभावना निदिध्यासनम् । एवं श्रवणमननादिभिर्निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्तयतीत्येवंरूपस्य श्रवणस्यावश्यापेक्षितमेव पूर्ववृत्तं वक्तव्यम् । तच्च नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसंपत्, इहामुत्र च फलभोगविरागः, मुमुक्षुत्वं चेत्येतत्साधनचतुष्टयम् । एतेन विना जिज्ञासाऽनुपपत्तेः । अर्थस्वभावादेवेदमेव पूर्ववृत्तमिति ज्ञायते । एतदुक्तं भवति—ब्रह्मस्वरूपाच्छादिकाविद्यामूलमपारमार्थिकं भेददर्शनमेव बन्धमूलम् । बन्धश्चापारमार्थिकः । स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्यते । निवर्तकं च ज्ञानं तत्त्वमस्यादिवाक्यजन्यम् । तस्यैतस्य वाक्यजन्यज्ञानस्य स्वरूपे तदुत्पत्तौ कार्ये वा कर्मणो नोपयोगः । विविदिषायामेव तूपयोगः । सा च पापमूलरजस्तमोनिबर्हणद्वारेण सत्त्वविवृद्ध्या भवतीतीममुपयोगमभिप्रेत्य "ब्राह्मणा *विविदिषन्ति*" इत्युक्तमिति । अतः कर्मज्ञानयोरनुपयोगादुक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम् ॥

अत्रोच्यते । यदुक्तमविद्यानिवृत्तिरेव हि मोक्षः । सा च ब्रह्मविज्ञानादेव भवतीति, तदभ्युपगम्यते । अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम् । किं वाक्याद्वाक्यार्थज्ञानमात्रम्, उत तन्मूलमुपासनात्मकं ज्ञानमिति?।

न तावद्वाक्यजन्यम्, तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः, तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च । न च वाच्यं भेदवासनायामनिरस्तायां वाक्यमविद्यानिवर्तकं ज्ञानं न जनयति, जातेऽपि सर्वस्य सहसैव भेदज्ञानानिवृत्तिर्न दोषाय। चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवदनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवतीति। यस्मात् सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः, सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात् । सत्यपि वाक्यार्थज्ञानेऽनादिवासनया(१)भेदज्ञानमनुवर्तत इति भवता न शक्यते वक्तुम्। भेदज्ञानसामग्र्या अपि वासनाया मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात् । ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ निवर्तकान्तराभावात् कदाचिदपि नास्या वासनाया निवृत्तिः । वासनाकार्यं भेदज्ञानं छिन्नमूलम्, अथ चानुवर्तत इति बालिशभाषितम् । द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वाद्द्विचन्द्रज्ञानानिवृत्तिरविरुद्धा । प्रबलप्रमाणबाधितत्वेन भयादिकार्यं तु निवर्तते । अपि च भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति । भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात्, तद्विरुद्धभावनायाश्चाल्पत्वादनया तन्निरासानुपपत्तेः । अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम् । तथा च श्रुतयः–"विज्ञाय प्रज्ञां कुर्वीत" "अनुविद्य विजानाति" "ॐमित्येवात्मानं ध्यायथ" "निचाय्य तन्मृत्युमुखात्प्रमुच्यते" "आत्मानमेव लोकमुपासीत" "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्येवमाद्याः । अत्र "निदिध्यासितव्यः" इत्यादिनैकार्थ्यात् "अनुविद्य विजानाति" "विज्ञाय प्रज्ञां कुर्वीत" इत्येवमादिभिर्वाक्य(२)र्थज्ञानस्य ध्यानोपकारकत्वात् तत् अनुविद्य विज्ञायेत्यनूद्य प्रज्ञां कुर्वीत विजानातीति ध्यानं विधीयते । श्रोतव्य इति चानुवादः । स्वाध्यायस्यार्थपरत्वेना-

(१) अनादिवासनयेत्यपि पाठान्तरम् ।
(२) "वाक्यार्थज्ञानं ध्यानोपकारकत्वादनुविद्य" इति पाठान्तरम् ।

धीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात्तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत इति श्रवणस्य प्राप्तत्वात्, श्रवणप्रतिष्ठार्थत्वान्मननस्य मन्तव्य इति चानुवादः । तस्माद् ध्यानमेव विधीयते । वक्ष्यति च “आवृत्तिरसकृदुपदेशात्” इति । तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते । विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात् । “मनो ब्रह्मेत्युपासीत” इत्यत्र “भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद” “न स वेद अकृत्स्नो ह्येषः” “आत्मेत्येवोपासीत” “यस्तद्वेद यत्स वेद स मयैतदुक्तः” इत्यत्र “अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से” इति । ध्यानं च तैलधारावदविच्छिन्नस्मृतिसंतानरूपा ध्रुवा स्मृतिः । “स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः” इति ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात् । सा च स्मृतिर्दर्शनसमानाकारा ।

“भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे” ॥

इत्यनेनैकार्थ्यात् । एवं च सति “आत्मा वा अरे द्रष्टव्यः” इत्यनेन निदिध्यासनस्य दर्शनरूपता विधीयते । भवति च स्मृतेर्भावनाप्रकर्षाद्दर्शनरूपता । वाक्यकारेणैतत्सर्वं प्रपञ्चितम् । “वेदनमुपासनं स्यात् तद्विषये श्रवणात्” इति सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम् । “सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात्प्रयाजादिवत्” इति पूर्वपक्षं कृत्वा “सिद्धं तूपासनशब्दात्” इति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम् । “उपासनं स्याद् ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च” इति तस्यैव वेदनस्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम् । सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता । दर्शनरूपता च प्रत्यक्षतापत्तिः । एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि—“नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन, यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्” इति । अनेन केवलश्रवणमनननिदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा “यमेवैष आत्मा वृणुते, तेनैव लभ्यः” इत्युक्तम् । “प्रियतम एव हि वरणीयो भवति यस्यायं निरतिशय-

प्रियः, स एवास्य प्रियतमो भवति। यथाऽयं प्रियतम आत्मानं प्राप्नोति तथा स्वयमेव भगवान् प्रयतत" इति भगवतैवोक्तम्।

"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते" ॥ इति।
"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः"।

इति च। अतः साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य स एव परमात्मना वरणीयो भवतीति तेनैव लभ्यते परमात्मेत्युक्तं भवति। एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते। उपासनपर्यायत्वाद्भक्तिशब्दस्य। अत एव श्रुतिस्मृतिभिरेवमभिधीयते—"तमेव विदित्वाऽतिमृत्युमेति" "तमेवं विद्वानमृत इह भवति" "नान्यः पन्था अयनाय विद्यते"।

"नाहं वेदैर्न तपसा न दानेन न चेज्यया।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप॥
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया" ॥ इति॥

एवंरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञादीनि कर्माणीति "यज्ञादिश्रुतेरश्ववत्" इत्यभिधास्यते। यद्यपि विविदिषन्तीति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते, तथापि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्याप्रयाणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात्तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि। वक्ष्यति च "आप्रयाणात्तत्रापि हि दृष्टम्" "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" "सहकारित्वेन च" इत्यादिषु। वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह—"तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवान्निर्वचनाच्च" इति। विवेकादीनां स्वरूपं चाह—"जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेकः" इति। अत्र निर्वचनम्—"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति। "विमोकः कामानभिष्वङ्गः" इति, "शान्त उपासीत" इति निर्वचनम्। "आरम्भणप

संशीलनं पुनःपुनरभ्यासः," निर्वचनं च स्मार्तमुदाहृतं भाष्य(१)कारेण "सदा तद्भावभावितः" इति । "पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया" इति निर्वचनं "क्रियावानेष ब्रह्मविदां वरिष्ठः" "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति च । "सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि" इति निर्वचनं "सत्येन लभ्यः" "तेषामेवैष विरजो ब्रह्मलोकः" इत्यादि । "देशकालवैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः, तद्विपर्ययोऽनवसादः" इति निर्वचनं "नायमात्मा बलहीनेन लभ्यः" इति । "तद्विपर्ययजा तुष्टिरुद्धर्षस्तद्विपर्ययोऽनुद्धर्षः" इति, अतिसन्तोषश्च विरोधीत्यर्थः । निर्वचनमपि "शान्तो दान्तः" इति । एवं नियमयुक्तस्याश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति । तथा च श्रुत्यन्तरं "विद्यां चाविद्यां च यस्तद्वेदोभयं सह, अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति । अत्राविद्याशब्दनिर्दिष्टं वर्णाश्रमविहितं कर्म, अविद्यया कर्मणा, मृत्युं ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म, तीर्त्वा अपोह्य, विद्यया ज्ञानेन, अमृतं ब्रह्म, अश्नुते प्राप्नोतीत्यर्थः । मृत्युतरणोपायतया प्रतीताऽविद्या विद्येतरत् विहितं कर्मैव । यथोक्तम् ।

"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया" ॥ इति ।

ज्ञानविरोधि च कर्म पुण्यपापरूपं, ज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतयोभयोरपि पापशब्दाभिधेयत्वम् । अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण, पापस्य च ज्ञानोत्पत्तिविरोधित्वम् "एष एवासाधु कर्म कारयति तं यमधो निनीषति" इति श्रुत्याऽवगम्यते । रजस्तमसोर्यथार्थज्ञानावरणहेतुत्वं सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितं "सत्त्वात्संजायते ज्ञानम्" इत्यादिना । अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनी-

(१) अत्र भाष्यकारशब्देन द्रमिडाचार्योऽभिप्रेतो रामानुजाचार्याणाम् ।

यं, तन्निरसनं चानभिसंहितफलेनानुष्ठितेन धर्मेण । तथा च श्रुतिः—"धर्मेण पापमपनुदति" इति । तदेवं ब्रह्मप्राप्तिसाधनं ज्ञानं सर्वाश्रमकर्मापेक्षम् । अतोऽपेक्षितकर्मस्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयमिति सैवापेक्षिता ब्रह्ममीमांसायाः पूर्ववृत्ता वक्तव्या । अपि च नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न संपत्स्यन्ते, फलकरणेतिकर्तव्यताधिकारिविशेषनिश्चयादृते कर्मस्वरूपतत्फलतत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरुपपादत्वात् । एषां साधनत्वं च विनियोगावसेयं, विनियोगश्च श्रुतिलिङ्गादिभ्यः, स च तार्तीयः । उद्गीथाद्युपासनानि कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणि ब्रह्मज्ञानापेक्षाणीतीहैव चिन्तनीयानि । तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादकानीति तस्माद्गुणोपपादनापेक्षाणि सुतरामिहैव सङ्गतानि । तेषां च कर्मस्वरूपाधिगमापेक्षा सर्वसंमता ।

यदप्याहुः—अशेषविशेषप्रत्यनीकं चिन्मात्रं ब्रह्मैव परमार्थस्तदतिरेकिनानाविधज्ञातृज्ञेयतत्कृतज्ञानभेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतं, "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयम्" "अथ परा यया तदक्षरमधिगम्यते" "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" "सत्यं ज्ञानमनन्तं ब्रह्म" ।

"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" ।
"यस्यामतं तस्य मतं मतं यस्य न वेद सः ॥

अविज्ञातं विजानतां विज्ञातमविजानताम्" "न दृष्टेर्द्रष्टारं पश्येः" "न मतेर्मन्तारं मन्वीथाः" "आनन्दो ब्रह्म" "इदं सर्वं यदयमात्मा" "नेह नानाऽस्ति किंचन" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" "केन कं विजानीयात्" वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" ।

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥
ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ।
परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते ।
यदेतद् दृश्यते मूर्तमेतद् ज्ञानात्मनस्तव ॥
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ।
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ॥
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ।
ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ॥
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ।
तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् ॥
विज्ञानं परमार्थो हि द्वैतमिथ्यार्थदर्शिनः ।
यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ॥
तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ।
वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः ॥
अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ।
इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ॥
विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ।
अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम्" ॥

इत्यादिभिर्वस्तुस्वरूपोपदेशपरैः शास्त्रैर्निर्विशेषचिन्मात्रं ब्रह्म सत्यमन्यत्सर्वं मिथ्येत्यभिधानात् । मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वं, यथा रज्ज्वाद्यधिष्ठानं सर्पादेः, दोषवशाद्धि तत्र तत्कल्पनम् । एवं

चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्यङ्मनुष्यस्थावरादिभेदं सर्वं जगद्यथावस्थितब्रह्मस्वरूपावबोधबाध्यं मिथ्यारूपम्। दोषश्च स्वरूपतिरोधानविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या। "अनृतेन हि प्रत्यूढाः" "तेषां सत्यानां सतामनृतमपिधानम्" "नासदासीन्नो सदासीत्तदानीम्" "तम आसीत्तमसा गूढमग्रेऽप्रकेतम्"

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्"।

"इन्द्रो मायाभिः पुरुरूप ईयते" "मम माया दुरत्यया"

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते"।

इत्यादिभिर्निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते। यथोक्तम्—

"ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः।
ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि॥
यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम्।
तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः॥
तस्मान्न हि विज्ञानमृतेऽस्ति किञ्चित् क्वचित् कदाचिद्द्विज वस्तुजातम्।
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम्॥
ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम्।
एकं सदैकं परमः परेशः स वासुदेवो [redacted] यतोऽन्यदस्ति॥
सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्।
एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते"॥ इति॥

अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं वदन्ति "न पुनर्मृत्यवे तदेकं पश्यति" "न पश्यो मृत्युं पश्यति" "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयङ्गतो भवति"

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।

क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे"॥ "ब्रह्म वेद ब्रह्मैव भवति"

"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः" इत्याद्याः श्रुतयः । अत्र मृत्युशब्देनाविद्याऽभिधीयते, यथा सनत्सुजातवचनं-"प्रमादं वै मृत्युमहं ब्रवीमि सदाऽप्रमादममृतत्वं ब्रवीमि"इति । "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" इत्यादिशोधकवाक्यायमेयनिर्विशेषस्वरूपब्रह्मात्मैकत्वविधानं च "अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद" "आत्मेत्येवोपासीत" "तत्त्वमसि" "त्वं वा अहमस्मि भगवो देवते अहं च त्वमसि भगवो देवते" "तद्योऽहं सोऽसौ योऽसौ सोऽहम्" इत्यादिवाक्यसिद्धम् । वक्ष्यति चैतदेव "आत्मेति तूपगच्छन्ति ग्राहयन्ति च"इति । तथा च वाक्यकारः—"आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः" इति । अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिर्युक्ता ॥

ननु च सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्यज्ञानेन क्रियते । क(१)थं वा रज्जुरेषा न सर्प इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते । तत्र द्वयोः प्रत्यक्षयोर्विरोधः, इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य चेति चेत् । तुल्ययोर्विरोधे वा(२)कथं बाध्यबाधकभावः । पूर्वोत्तरयोर्दुष्कारणजन्यत्वतदभावाभ्यामिति चेत् । शास्त्रप्रत्यक्षयोरपि समानमेतत् । एतदुक्तं भवति—बाध्यबाधकभावे तुल्यत्वसापेक्षत्वनिरपेक्षत्वादि न कारणम् । ज्वालाभेदानुमानेन प्रत्यक्षोपमर्द्दायोगात् । तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते । एवं च सति द्वयोः प्रमाणयोर्विरोधे यत्सम्भाव्यमानान्यथासिद्धि तद् बाध्यम्, अनन्यथासिद्धमनवकाशमितरद् बाधकमिति सर्वत्र बाध्यबाधकभावनिर्णय इति । तस्मादनादिनिधनाविच्छिन्नसंप्रदायासम्भाव्यमानदोषगन्धानवकाशशास्त्रजन्यनिर्विशेषनित्यशुद्धमुक्तबुद्धस्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन सम्भाव्यमानदोषसावकाशप्रत्यक्षादिसिद्धविविधविकल्परूपबन्धनिवृत्तिर्युक्तैव । सम्भाव्यते च विविधविकल्पभेदप्रपञ्चग्राहिप्रत्यक्षस्यानादिभेदवासनादिरूपाविद्याख्यो दोषः । अनादिनिध-

(१) "कथं च"इति पाठान्तरम् ।

(२) "वा" इति पुस्तकान्तरे नास्ति ।

नाद्यविच्छिन्नसम्प्रदायतया निर्दोषस्यापि शास्त्रस्य "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत । सत्यम् । पूर्वापरापच्छेदे पूर्वशास्त्रवन्मोक्षशास्त्रस्य निरवकाशत्वात्तेन बाध्यत एव । वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः, निर्गुणत्वात्परस्य ब्रह्मणः । ननु च "यः सर्वज्ञः स सर्ववित्"

"पराऽस्य शक्तिर्विविधैव श्रूयते ।
स्वाभाविकी ज्ञानबलक्रिया च" ।

"सत्यकामः सत्यसंकल्पः" इत्यादिब्रह्मस्वरूपप्रतिपादनपराणां कथं बाध्यत्वम्—निर्गुणवाक्यसामर्थ्यादिति ब्रूमः । एतदुक्तं भवति "अस्थूलमनण्वह्रस्वम्" "सत्यं ज्ञानमनन्तं ब्रह्म" "निर्गुणं निरञ्जनम्" इत्यादिवाक्यानि निरस्तसमस्तविशेषकूटस्थनित्यचैतन्यं ब्रह्मेति प्रतिपादयन्ति, इतराणि च सगुणम् । उभयविधवाक्यानां विरोधेऽनेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति न किञ्चिदपहीनम् ।

ननु च "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्र सत्यज्ञानादयो गुणाः प्रतीयन्ते । नेत्युच्यते, सामानाधिकरण्येनैकार्थत्वप्रतीतेः । अनेकगुणविशिष्टाभिधानेऽप्येकार्थत्वमविरुद्धमिति चेत् अनभिधानज्ञो देवानांप्रियः, एकार्थत्वं नाम सर्वपदानामर्थैक्यम्, विशिष्टपदार्थाभिधाने विशेषणभेदेन पदानामर्थभेदोऽवर्जनीयः, ततश्चैकार्थत्वं न सिद्ध्यति । एवं तर्हि सर्वपदानां पर्यायता स्यात्, अविशिष्टार्थाभिधायित्वात् । एकार्थाभिधायित्वेऽप्यपर्यायत्वमवहितमनाः शृणु, एकत्वतात्पर्यनिश्चयादेकस्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकपरत्वेन सर्वपदानामर्थवत्त्वमेकार्थत्वमपर्यायता च । एतदुक्तं भवति, लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपं, तद्विरोधि रूपं सर्वमनेन पदत्रयेण फलतो व्युदस्यते । तत्र सत्यपदं विकारास्पदत्वेनासत्याद्वस्तुनो व्यावृत्तपरं, ज्ञानपदं चान्याधीनप्रकाशाज्जडरूपाद्वस्तुनो व्यावृत्तपरं, अनन्तपदं च देशतः कालतो वस्तुतश्च परिच्छिन्नाद् व्यावृत्तपरम् । न च व्यावृत्तिर्भावरूपोऽभावरूपो वा धर्मः, अपि तु सकलेतरविरोधि ब्रह्मैव । यथा

शीघ्रत्वादेः कादम्बादिव्यावृत्तिस्तत्पदार्थस्वरूपमेव न धर्मान्तरम्। एवमेकस्यैव वस्तुनः सकलेतरविरोधाकारताप्रतिपादकमर्थान्तरमेकार्थमपर्यायं च पदद्वयम् । तस्मादेकमेव ब्रह्म स्वयंज्योतिर्निर्धूतनिखिलविशेषमित्युक्तं भवति । एवं वाक्यार्थप्रतिपादने सत्येव "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयम्"इत्यादिभिरैकार्थ्यम् । "यतो वा इमानि भूतानि जायन्ते" "सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिभिर्जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूपमिदमुच्यते"सत्यं ज्ञानमनन्तं ब्रह्म"इति । तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मावगतम्। जगत्कारणतयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य प्रतिपिपादयिषितं स्वरूपं तदविरोधेन वक्तव्यम् । अद्वितीयत्वश्रुतिर्गुणतोऽपि सद्वितीयतां न सहते । अन्यथा "निरञ्जन""निर्गुणम्"इत्यादिभिश्च विरोधः। अतश्चैतल्लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयति । ननु च सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्थापनपरत्वेन लक्षणा स्यात् । नैष दोषः, अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात्। सामानाधिकरण्यस्य ह्यैक्य एव तात्पर्यमिति सर्वसम्मतम् । ननु च सर्वपदानां लक्षणा न दृष्टचरी ततः किम्, वाक्यतात्पर्यविरोधे सत्येकस्यापि न दृष्टा, समभिव्याहृतपदसमुदायस्यैतत्तात्पर्यमिति निश्चिते सति द्वयोस्त्रयाणां सर्वेषां वा तदविरोधायैकस्यैव लक्षणा न दोषाय । तथा च शास्त्रस्थैरभ्युपगम्यते—कार्यवाक्यार्थवादिभिर्लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते, अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वात् । लिङादिभिः क्रियाकार्यं लक्षणया प्रतिपाद्यत । कार्यान्वितस्वार्थाभिधायिनां चेतरेषां पदानामपूर्वकार्यान्वित एव मुख्योऽर्थ इति क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकमेव । अतो वाक्यतात्पर्याविरोधाय सर्वपदानां लक्षणाऽपि न दोषः । अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणम् । प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम् । सति च विरोधे बलीयस्त्वं वक्तव्यम्। विरोध एव न दृश्यते निर्विशेषसन्मात्रब्रह्मग्राहित्वात्प्रत्यक्षस्य ।

ननु च घटोऽस्ति पटोऽस्तीति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहीत्युच्यते? विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकज्ञानवदेकव्यवहारहेतुतैव स्यात्। सत्यम्। तथैवात्र विविच्यते। कथम्? घटोऽस्तीत्यत्रास्तित्वं तद्भेदश्च व्यवह्रियते, न च द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं सम्भवति, तयोर्भिन्नकालज्ञानफलत्वात्, प्रत्यक्षज्ञानस्य चैकक्षणवर्तित्वात्। तत्र स्वरूपं भेदो वा प्रत्यक्षस्य विषय इति विवेचनीयम्। भेदग्रहणस्य स्वरूपग्रहणतत्प्रतियोगिस्मरणसव्य(१)पेक्षत्वादेव स्वरूपविषयत्वमवश्याश्रयणीयमिति न भेदः प्रत्यक्षेण गृह्यते। अतो भ्रान्तिमूल एव भेदव्यवहारः। किंच भेदो नाम कश्चित्पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते। भेदस्तावन्न वस्तुनः स्वरूपम्। वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत् सर्वस्माद् भेदव्यवहारप्रसक्तेः। न च वाच्यं स्वरूपे गृहीतेऽपि भिन्न इति व्यवहारस्य प्रतियोगिस्मरणसव्यपेक्षत्वात्, तत्स्मरणाभावेन तदानीमेव न भेदव्यवहार इति। स्वरूपमात्रभेदवादिनो हि प्रतियोग्यपेक्षा च नोत्प्रेक्षितुं क्षमा। स्वरूपभेदयोः स्वरूपत्वाविशेषात्। यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षो भेदव्यवहारोऽपि तथैव स्यात्, हस्तः कर इतिवत् घटो भिन्न इति पर्यायत्वं च स्यात्। नापि धर्मः, धर्मत्वे सति तस्य स्वरूपाद् भेदोऽवश्याश्रयणीयः। अन्यथा स्वरूपमेव स्यात्। भेदे च तस्यापि भेदस्तद्धर्मः तस्यापीत्यनवस्था। किंच जात्यादिधर्मविशिष्टवस्तुग्रहणे सति भेदग्रहणम्। भेदग्रहणे सति जात्यादिधर्मविशिष्टवस्तुग्रहणमित्यन्योन्याश्रयणम्। अतो भेदस्यापि दुर्निरूपत्वात् सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम्। किंच घटोऽस्ति पटोऽस्ति, घटोऽनुभूयते पटोऽनुभूयते इति सर्वे पदार्थाः सत्तानुभूतिघटिता एव दृश्यन्ते अत्र सन्मात्रं सर्वासु प्रतिपत्तिष्वनुवर्तमानं दृश्यत इति तदेव परमार्थः। विशेषास्तु व्यावर्तमानतयाऽपरमार्था रज्जुसर्पादिवत् तथा रज्जुरधिष्ठानतयाऽनुवर्तमाना सती पर

(१) "सापेक्षत्वात्" इति पाठान्तरम्।

मार्थः, व्यावर्तमानास्सर्पभूदलनाम्बुधारादयोऽपरमार्थाः । ननु च रज्जुसर्पादौ रज्जुरियं न सर्प इत्यादिरज्ज्वाद्यधिष्ठानयाथात्म्यज्ञानेन बाधितत्वात् सर्पादेरपारमार्थ्यम्, न व्यावर्तमानत्वात्, रज्ज्वादेरपि पारमार्थ्यं नानुवर्तमानतया किन्त्वबाधितत्वात्, अत्र त्वबाधितानां घटादीनां कथमपारमार्थ्यम् । उच्यते, घटादौ दृष्टा व्यावृत्तिः, सा किंरूपेति विवेचनीयम् । किं घटोऽस्तीत्यत्र पटाद्यभावः, सिद्धं तर्हि घटोऽस्तीत्यनेन पटादीनां बाधितत्वम् । अतो बाधफलभूता विषयनिवृत्तिर्व्यावृत्तिः, सा व्यावर्तमानानामपारमार्थ्यं साधयति, रज्जुवत् सन्मात्रमबाधितमनुवर्तते । तस्मात् सन्मात्रातिरिक्तं सर्वमपरमार्थम् । प्रयोगश्च भवति, सत् परमार्थमनुवर्तमानत्वात् रज्जुसर्पादौ रज्ज्वादिवत्, घटादयोऽपरमार्थाः व्यावर्तमानत्वात् रज्ज्वाद्यधिष्ठानसर्पादिवदिति । एवं सत्यनुवर्तमानाऽनुभूतिरेव परमार्था, सैव सती ॥

ननु च सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम् । नैवम् । भेदो हि प्रत्यक्षाविषयत्वाद्दुर्निरूपत्वाच्च पुरस्तादेव निरस्तः । अत एव सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमनुसरति । तस्मात् सत् अनुभूतिरेव । सा च स्वतःसिद्धाऽनुभूतित्वात्, अन्यतः सिद्धौ घटादिवदननुभूतित्वप्रसङ्गः । किञ्चानुभावान्तरापेक्षा चानुभूतेर्न शक्या कल्पयितुम्, स्वसत्तयैव प्रकाशमानत्वात्, न ह्यनुभूतिर्वर्तमाना घटादिवदप्रकाशा दृश्यते, येन परायत्तप्रकाशाऽभ्युपगम्येत । अथैवं मनुषे, उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासते घटोऽनुभूयत इति, न हि कश्चिद्घटोऽयमिति जानंस्तदानीमेवाविषयभूतामनिदम्भावामनुभूतिमप्यनुभवति । तस्माद् घटादिप्रकाशनिष्पत्तौ चक्षुरादिकरणसन्निकर्षवदनुभूतेः सद्भाव एव हेतुः । तदनन्तरमर्थगतकादाचित्कप्रकाशातिशयलिङ्गेनानुभूतिरनुमीयते । एवं सत्यनुभूतेरज्ञाताया अर्थवज्जडत्वमापद्येतेति चेत् । किमिदमजडत्वं नाम । न तावत्स्वसत्तायाः प्रकाशाव्यभिचारः, सुखादिष्वपि तत्सम्भवात्, न हि कदाचि

दपि सुखादयः सन्तो नोपलभ्यन्ते । अतोऽनुभूतिः स्वयमेव नानुभूयते, अर्थान्तरं स्पृशतोऽप्यङ्गुल्यग्रस्य स्वात्मस्पर्शवदशक्यत्वादिति । तदिदम नाकलितानुभवविभवस्य स्वमतिविजृम्भितम्, अनुभूतिव्यतिरेकिणो विषयधर्मस्य प्रकाशस्य रूपादिवदनुपलब्धेः, उभयाभ्युपेतानुभूत्यैवाशेषव्यवहारोपपत्तौ प्रकाशाख्यार्थधर्मकल्पनानुपपत्तेश्च । अतो नानुभूतिरनुमीयते, नापि ज्ञानान्तरसिद्धा, अपि [illegible] सर्वं साधयन्त्यनुभूतिः स्वयमेव सिद्ध्यति । प्रयोगश्च, अनुभूतिरनन्याधीनस्वधर्मव्यवहारा स्वसम्बन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात् । यः स्वसम्बन्धादर्थान्तरे तद्धर्मव्यवहारहेतुः स तयोः स्वस्मिन्ननन्याधीनो दृष्टः, यथा रूपादिश्चाक्षुषत्वादौ । रूपादिर्हि पृथिव्यादौ स्वसम्बन्धाच्चाक्षुषत्वादि जनयन् स्वस्मिन् न रूपादिसम्बन्धाधीनचाक्षुषत्वादिः । अतोऽनुभूतिरात्मनः प्रकाशमानत्वे प्रकाशत इति व्यवहारे च स्वयमेव हेतुः । सेयं स्वयंप्रकाशाऽनुभूतिर्नित्या च प्रागभावाद्यभावात्, तदभावश्च स्वतःसिद्धत्वादेव, न ह्यनुभूतेः स्वतःसिद्धायाः प्रागभावः स्वतोऽन्यतो वाऽवगन्तुं शक्यते । अनुभूतिः स्वाभावमवगमयन्ती सती तावन्नावगमयति, तस्याः सत्त्वे विरोधादेव तदभावो नास्तीति कथं सा स्वाभावमवगमयति, एवमसत्यपि नावगमयति, अनुभूतिः स्वयमसती कथं स्वाभावे प्रमाणं भवेत् । नाप्यन्यतोऽवगन्तुं शक्यते, अनुभूतेरनन्यगोचरत्वात्, अस्याः प्रागभावं साधयत् प्रमाणमनुभूतिरियमिति विषयीकृत्य तदभावं साधयेत्, स्वतःसिद्धत्वेनेदमिति विषयीकारानर्हत्वान्न तत्प्रागभावोऽन्यतः शक्यावगमः । अतोऽस्याः प्रागभावाद्यभावादुत्पत्तिर्न शक्यते वक्तुमित्युत्पत्तिप्रतिबद्धा *ये चान्येऽपि भावविकारास्तस्या न सन्ति । अनुत्पन्नेयमनुभूतिरात्मनि नानात्वमपि न सहते, व्यापकविरुद्धोपलब्धेः । न ह्यनुत्पन्नं नानाभूतं दृष्टम्, भेदादीनामनुभाव्यत्वेन च रूपादिवदनुभूतिधर्मत्वं न संभवति । अतोऽनुभूतेरनुभवस्वरूपत्वादेवान्योऽपि कश्चिदनुभाव्यो नास्या धर्मः । अतो निर्धूतनि-

* उत्पत्तिस्थान * ।

खिलभेदा संवित्, अत एव नास्याः स्वरूपातिरिक्त आश्रयो ज्ञाता नाम कश्चिदस्तीति स्वप्रकाशरूपा सैवात्मा, अजडत्वाच्च । अनात्मत्वव्याप्तं जडत्वं संविदि व्यावर्तमानमनात्मत्वमपि हि संविदो व्यावर्तयति ॥

ननु चाहं जानामीति ज्ञातृता प्रतीतिसिद्धा । नैवम् । सा भ्रान्तिसिद्धा रजततेव शुक्तिशकलस्य, अनुभूतेः स्वात्मनि कर्तृत्वायोगात् अतो मनुष्योऽहमित्यत्यन्तबहिर्भूतमनुष्यत्वादिविशिष्टपिण्डात्माभिमानवत् ज्ञातृत्वमप्यध्यस्तम् । ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम्, तच्च विक्रियात्मकं जडं विकारिद्रव्याहङ्कारग्रन्थिस्थमविक्रिये साक्षिणि सन्मात्रे[1] चात्मनि कथमिव सम्भवति । दृश्याधीनसिद्धित्वादेव रूपादेरिव कर्तृत्वादेर्नात्मधर्मत्वम् । सुषुप्तिमूर्छाद्यवहंप्रत्ययाभावेऽप्यात्मानुभवदर्शनेन नात्मनोऽहंप्रत्ययगोचरत्वम् । कर्तृत्वेऽहंप्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येव जडत्वपराक्त्वानात्मत्वादिप्रसङ्गो दुष्परिहरः । अहंप्रत्ययगोचरात्कर्तृतया प्रसिद्धाद्देहात्तत्क्रियाफलस्य स्वर्गादेर्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमेव, तथाऽहमर्थात् ज्ञातुरपि विलक्षणः साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम् । एवमविक्रियानुभवस्वरूपस्यैवाभिव्यञ्जको जडोऽप्यहङ्कारः स्वाश्रयतया तमभिव्यनक्ति, आत्मस्थतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः, दर्पणजलखण्डादिर्हि मुखचन्द्रबिम्बगोत्वादिकमात्मस्थतयाऽभिव्यनक्ति, तत्कृतोऽयं जानाम्यहमिति भ्रमः । स्वप्रकाशाया अनुभूतेः कथमिव तदभिव्यङ्ग्यजडरूपाहङ्कारेणाभिव्यङ्ग्यत्वमिति मा वोचः, रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्वोप[2]दर्शनात् । जालकरन्ध्रनिष्क्रान्तद्युमणिकिरणानां तदभिव्यङ्ग्ये नापि करतलेन स्फुटतरप्रकाशो हि दृष्टचरः । अतोऽहं जानामीति ज्ञाताऽयमहमर्थश्चिन्मात्रात्मनो न पारमार्थिको धर्मः, अत एव सुषुप्तिमुक्त्योर्नान्वेति, तत्र ह्यहमुल्लेखविगमेन[3] स्वाभाविकानुभवमात्ररूपेणात्माऽवभासते, अत एव सुप्तोत्थितः

१ चिन्मात्रात्मनीति पुस्तकान्तरपाठः ।
२ तदभिव्यञ्जकत्वदर्शनादिति पुस्तकान्तरम् ।
३ अहमर्थोल्लेखविगमेनेति पुस्तकान्तरम् ।

कदाचिन्मामप्यहं न ज्ञातवानिति परामृशतीति। तस्मात्परमार्थतो निरस्तसमस्तभेदविकल्पनिर्विशेषचिन्मात्रैकरसकूटस्थनित्यसंविदेव भ्रान्त्या ज्ञातृज्ञेयज्ञानरूपविविधविचित्रभेदा विवर्तत इति तन्मूलभूताविद्यानिबर्हणाय नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इति ॥

तदिदमौपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरहिणामनादिपापवासनादूषिताशेषशेमुषीकाणामनधिगतपदवाक्यस्वरूपतदर्थयाथात्म्यप्रत्यक्षादिसकलप्रमाणवृत्ततदितिकर्तव्यतारूपसमीचीनन्यायमार्गाणां विकल्पासहविविधकुतर्ककल्ककल्पितमिति न्यायानुगृहीतवाक्यप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरनादरणीयम् । तथा हि निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनीदं प्रमाणमिति न शक्यते वक्तुम्, सविशेषवस्तुविषयत्वात्सर्वप्रमाणानाम् । यस्तु स्वानुभवसिद्धमिति स्वगोष्ठीनिष्ठः समयः, सोऽप्यात्मसाक्षिकविशेषानुभ[1]वनिरस्तः, इदमहमदर्शमिति केनचिद्विशेषेण विशिष्टविषयत्वात्सर्वेषामनुभवानाम् । सविशेषोऽप्यनुभूयमानोऽनुभवः केनचिद्युक्त्याभासेन निर्विशेष इति निष्कृष्यमाणः सत्ताऽतिरेकिभिः स्वासाधारणैः स्वभावविशेषैर्निष्क्रष्टव्य इति निष्कर्षकहेतुभूतैः[2] सत्ताऽतिरेकिभिः स्वासाधारणैः स्वभावविशेषैः सविशेष एवावतिष्ठते । अतः कैश्चिद्विशेषैर्विशिष्टस्यैव वस्तुनोऽन्ये विशेषा निरस्यन्त इति न क्वचिन्निर्विशेषवस्तुसिद्धिः । धियो हि धीत्वं स्वप्रकाशता च, ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः । स्वापमदमूर्छासु च सविशेष एवानुभव इति स्वावसरे निपुणतरमुपपादयिष्यामः । स्वाभ्युपगताश्च नित्यत्वादयो ह्यनेकविशेषाः सन्त्येव, ते च न वस्तुमात्रमिति शक्योपपादनाः, वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनात्, स्वाभिमततद्विधाभेदैश्च स्वमतोपपादनात् । अतः प्रामाणिकविशेषैर्विशिष्टमेव वस्त्विति वक्तव्यम् । शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसा-

१ सविशेषानुभवादेव निरस्त इति तु पाठान्तरम् ।
२ निष्कर्षहेतुभूतैरिति पाठस्तु साधीयान् ।

समर्थम्, पदवाक्यरूपेण प्रवृत्तेः। प्रकृतिप्रत्यययोगेन हि पदत्वम् । प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम् । पदभेदश्चार्थभेदनिबन्धनः। पदसङ्घातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेन निर्विशेषवस्तुप्रतिपादनासामर्थ्यात् न निर्विशेषवस्तुनि शब्दः प्रमाणम् । प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदभिन्नस्य न निर्विशेषवस्तुनि प्रमाणभावः । सविकल्पकं जात्याद्यनेकपदार्थविशिष्टविषयत्वादेव सविशेषविषयम् । निर्विकल्पकमपि सविशेषविषयमेव, सविकल्पके स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसन्धानहेतुत्वात् । निर्विकल्पकं नाम केनचिद्विशेषेण वियुक्तस्य ग्रहणं न सर्वविशेषरहितस्य, तथाभूतस्य कदाचिदपि ग्रहणादर्शनात्, अनुपपत्तेश्च । केनचिद्विशेषेणेदमित्थमिति हि सर्वा प्रतीतिरुपजायते, त्रिकोणसास्नादिसंस्थानविशेषेण विना कस्यचिदपि पदार्थस्य ग्रहणायोगात् । अतो निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणम्, द्वितीयादिपिण्डग्रहणं सविकल्पकमित्युच्यते । तत्र प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताकारता न प्रतीयते, द्वितीयादिपिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिः । प्रथमप्रतीत्यनुसंहितवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिधर्मविशिष्टत्वं द्वितीयादिपिण्डग्रहणावसेयमिति द्वितीयादिग्रहणस्य सविकल्पकत्वम् सास्नादिवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिर्न प्रथमपिण्डग्रहणे गृह्यत इति प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम्, न पुनः संस्थानरूपजात्यादेरग्रहणात् । संस्थानरूपजात्यादेरप्यैन्द्रियकत्वाविशेषात् संस्थानेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च प्रथमपिण्डग्रहणेऽपि ससंस्थानमेव वस्त्वित्थमित्थमिति गृह्यते । अतो द्वितीयादिपिण्डग्रहणेषु गोत्वादेरनुवृत्तिधर्मविशिष्टता संस्थानिसंस्थानवच्च सर्वदैव गृह्यत इति तेषु सविकल्पकत्वमेव । अतः प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम् । अत एव सर्वत्र भिन्नाभिन्नत्वमपि निरस्तम् । इदमित्थमिति प्रतीताविदमित्थंभावयोरैक्यं कथमिव प्रत्येतुं शक्यते । तत्रेत्थंभावः सास्नादिसंस्थानविशेषः, तद्विशेष्यं द्रव्यमिदमंश इत्यनयोरैक्यं प्रतीतिपराहतमेव । तथा हि प्रथममेव वस्तु प्रतीयमानं सकलेतरव्यावृत्तमेव प्रतीयते, व्यावृत्तिश्च गोत्वा-

दिसंस्थानविशेषविशिष्टतयेदमित्थमिति प्रतीतिः । सर्वत्र विशेषणविशेष्यभावप्रतिपत्तौ तयोर¹प्यत्यन्तभेदः प्रतीत्यैव सुव्यक्तः । तत्र दण्डकुण्डलादयः पृथक्संस्थानसंस्थितास्स्वनिष्ठाश्च कदाचित्क्वचिद् द्रव्यान्तरविशेषणतयाऽवतिष्ठन्ते, गोत्वादयस्तु द्रव्यसंस्थानतयैव पदार्थभूताः सन्तो द्रव्यविशेषणतयाऽवस्थिताः । उभयत्र विशेषणविशेष्यभावः समानः, तत एव तयोर्भेदप्रतीतिश्च । इयांस्तु विशेषः पृथक्स्थितियोग्या दण्डादयः, गोत्वादयस्तु नियमेन तदनर्हा इति । अतो वस्तुविरोधः प्रतीतिपराहत इति प्रतीतिप्रकारनिह्नवादेवोच्यते, प्रतीतिप्रकारो हि इदमित्थमित्येव सर्वसम्मतः । तदेतत्सूत्रकारेण "नैकस्मिन्नसंभवादि"ति सुव्यक्तमुपपादितम् । अतः प्रत्यक्षस्य सविशेषविषयत्वेन प्रत्यक्षादिदृष्टसंबन्धविशिष्टविषयत्वादनुमानमपि सविशेषविषयमेव । प्रमाणसंख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषय इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः । वस्तुगतस्वभावविशेषैस्तदेव वस्तु निर्विशेषमिति वदन् जननीवन्ध्यात्वप्रतिज्ञावत् स्ववाग्विरोधमपि न जानाति ॥

यत्तु प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयम्, भेदश्च विकल्पासहत्वाद् दुर्निरूप इत्युक्तम् तदपि जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वात् जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम् । संवेदनवद्रूपादिवच्च परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि संभवत्येव । अत एव च नानवस्थाऽन्योन्याश्रयणं च । एकक्षणवर्तित्वेऽपि प्रत्यक्षज्ञानस्य तस्मिन्नेव क्षणे वस्तुभेदरूपतत्संस्थानरूपगोत्वादेर्गृहीतत्वात् क्षणान्तरग्राह्यं न किंचिदिह तिष्ठति । अपि च सन्मात्रग्राहित्वे घटोऽस्ति पटोऽस्तीति विशिष्टविषया प्रतिपत्तिर्विरुध्यते । यदि च सन्मात्रातिरेकिवस्तुसंस्थानरूपजात्यादिलक्षणो भेदः प्रत्यक्षेण न गृहीतः किमित्यश्वार्थी महिषदर्शनेन निवर्तते । सर्वासु प्रतिपत्तिषु सन्मात्रमेव विषयश्चेत्, तत्तत्प्रतिपत्ति-

१ अपिशब्दः पुस्तकान्तरे नास्ति ।

विषयसहचारिणः सर्वे शब्दा एकैकप्रतिपत्तिषु किमिति न स्मर्यन्ते । किंचाश्वे हस्तिनि च संवेदनयोरेकविषयत्वेनोपरितनस्य गृहीतग्राहित्वात् विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यात् । प्रतिसंवेदनं विशेषाभ्युपगमे प्रत्ययस्य विशिष्टार्थविषयत्वमेवाभ्युपगतं भवति । सर्वेषां संवेदनानामेकविषयतायामेकेनैव संवेदनेनाशेषविषयग्रहणादन्यबुद्ध्यभावश्च प्रसज्येत । न च चक्षुषा सन्मात्रं गृह्यते, तस्य रूपरूपिरूपैकार्थसमवेतपदार्थग्राहित्वात् । नापि त्वचा, स्पर्शवद्वस्तुविषयत्वात् । श्रोत्रादीन्यपि न सन्मात्रविषयाणि, किन्तु शब्दरसगन्धलक्षणविशेषविषयाण्येव । अतः सन्मात्रस्य ग्राहकं न किंचिदिह दृश्यते । निर्विशेषसन्मात्रस्य प्रत्यक्षेणैव ग्रहणे तद्विषयागमस्य प्राप्तविषयत्वेनानुवादकत्वमेव स्यात्, सन्मात्रग्रहणः प्रमेयभावश्च, ततो नष्टत्वनाशित्वादयस्त्वयैवोक्ताः । अतो वस्तुसंस्थानरूपजात्यादिलक्षणभेदविशिष्टविषयमेव प्रत्यक्षम् । संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिग्राह्यस्यादर्शनात्, तावतैव गोत्वादिजातिव्यवहारोपपत्तेः अतिरेकवादेऽपि संस्थानस्य संप्रतिपन्नत्वाच्च संस्थानमेव जातिः । संस्थानं नाम स्वासाधारणरूपमिति यथावस्तु संस्थानमनुसंधेयम् । जातिग्रहणेनैव भिन्न इति व्यवहारसंभवात् पदार्थान्तरादर्शनादर्थान्तरत्वादिनाऽप्यभ्युपगतत्वाच्च गोत्वादिरेव भेदः । ननु च जात्यादिरेव भेदश्चेत्, तस्मिन् गृहीते तद्व्यवहारात्[1] भेदव्यवहारोऽपि स्यात् । सत्यम् । भेदश्च व्यवह्रियत एव गोत्वादिव्यवहारात् । गोत्वादिरेव हि सकलेतरस्य व्यावृत्तिः गोत्वादौ गृहीते सकलेतरसजातीयबुद्धिव्यवहारयोर्निवृत्तेः, भेदग्रहणेनैव ह्यभेदनिवृत्तिः । अयमस्माद्भिन्न इति [illegible] व्यवहारे प्रतियोगिनिर्देशस्य तदपेक्षत्वात् प्रतियोग्यपेक्षया भिन्न इति व्यवहार इत्युक्तम् । यत्पुनर्घटादीनां विशेषाणां व्यावर्तमानत्वेनापारमार्थ्यमुक्तम्, तदनालोचितबाध्यबाधकभावव्यावृत्त्यनुवृत्तिविशेषस्य भ्रान्तिपरिकल्पितम् । द्वयोर्ज्ञानयोर्हि विरोधे बाध्यबाधकभावः, बाधितस्यैव व्यावृत्तिः । अत्र घटप-

१ तद्व्यवहारवद् भेदव्यवहारोऽपीति पाठान्तरम् ।

टादिषु देशकालभेदेन विरोध एव नास्ति। यस्मिन् देशे यस्मिन् काले यस्य सद्भावः प्रतिपन्नः, तस्मिन् देशे तस्मिन् काले तस्याभावः प्रतिपन्नश्चेत्, तत्र विरोधाद्बलवतो बाधकत्वं बाधितस्य च निवृत्तिः। देशान्तरकालान्तरसंबन्धितयाऽनुभूतस्यान्यदेशकालयोरभावप्रतीतौ न विरोध इति कथमत्र बाध्यबाधकभावः, अन्यत्र निवृत्तस्यान्यत्र निवृत्तिर्वा कथमुच्यते। रज्जुसर्पादिषु तु तद्देशकालसंबन्धितयैवाभावप्रतीतेर्विरोधो बाधकत्वं व्यावृत्तिश्चेति देशकालान्तरे, दृष्टस्य देशकालान्तरेऽवर्तमानत्वं मिथ्यात्वव्याप्तं न दृष्टमिति न व्यावर्तमानत्वमात्रमपारमार्थ्यहेतुः। अव्यावर्तमानत्वात् सत् परमार्थ इति, तत्र सिद्धमेवेति न साधनमर्हति। अतो न सन्मात्रमेव वस्तु। अनुभूतितद्विषय[1]योश्च विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वादबाधितत्वाच्चानुभूतिरेव सतीत्येतदपि निरस्तम्॥

यत्त्वनुभूतेः स्वयंप्रकाशत्वमुक्तम्, तद्विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव, न तु सर्वेषां सर्वदा तथैवेति नियमोऽस्ति, परानुभवस्य हानोपादानादिलिङ्गकानुमानज्ञानविषयत्वात्, स्वानुभवस्याप्यतीतस्याज्ञासिषमिति ज्ञानविषयत्वदर्शनाच्च। अतोऽनुभूतिश्चेत्स्वतःसिद्धेति वक्तुं न शक्यते, अनुभूतेरनुभाव्यत्वेऽनु[2]भूतित्वमपि दुरुक्तम्, स्वगतातीतानुभवानां परगतानुभवानां चानुभाव्यत्वेनाननुभूतित्वप्रसङ्गात्। परानुभवानुमानानभ्युपगमे च शब्दार्थसम्बन्धग्रहणाभावेन समस्तशब्दव्यवहारोच्छेदप्रसङ्गः। आचार्यस्य ज्ञानवत्त्वमनुमाय तदुपसत्तिश्च क्रियते, सा च नोपपद्यते। न चान्यविषयत्वेऽननुभूतित्वम्। अनुभूतित्वं नाम वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम्, स्वसत्तयैव स्वविषयसाधनत्वं वा। ते चानुभवान्तरानुभाव्यत्वेऽपि स्वानुभवसिद्धे नापगच्छत इति नानुभूतित्वमपगच्छति। घटादेस्त्वननुभूतित्वमेव तत्स्वभावविरहात्, नानुभाव्यत्वात्। तथाऽनुभूतेरननुभाव्यत्वेऽप्यननुभूतित्वप्रसङ्गो दुर्वारः,

१ अनुभूतिसद्विषययोश्चेति पाठान्तरम्, अनुभूतितद्विषययोश्चेति तु वास्तव पाठः।
२ अननुभूतित्वमिति पुस्तकान्तरपाठः पूर्वपक्षपन्यदृष्ट्या साधुरिति भाति।

गगनकुसुमादेरननुभाव्यस्याननुभूतित्वात्। गगनकुसुमादेरननुभूतित्वमवस्तुत्वप्रयुक्तम्, नाननुभाव्यत्वप्रयुक्तमिति चेत्। एवं तर्हि घटादेरप्यज्ञानाविरोधित्वमेवाननुभूतित्वनिबन्धनम्, नानुभाव्यत्वमित्यभ्युपेयताम्। अनुभूतेरनुभाव्यत्वेऽज्ञानाविरोधित्वमपि तस्या घटादेरिव प्रसज्यत इति चेत्। अननुभाव्यत्वेऽपि गगनकुसुमादेरिवाज्ञानाविरोधित्वमपि प्रसज्यत एव। अतोऽनुभाव्यत्वेऽननुभूतित्वमित्युपहास्यम्। यत्तु संविदः स्वतःसिद्धायाः प्रागभावाद्यभावादुत्पत्तिर्निरस्यते, तत् अन्धस्य जात्यन्धेन यष्टिः प्रदीयते। प्रागभावस्य ग्राहकाभावादभावो न शक्यते वक्तुम्, अनुभूत्यैव ग्रहणात्। कथमनुभूतिः सती तदानीमेव स्वाभावं विरुद्धमवगमयतीति चेत्। न ह्यनुभूतिः स्वसमानकालवर्तिनमेव विषयीकरोतीत्यस्ति नियमः, अतीतानागतयोरविषयत्वप्रसङ्गात्। अथ मन्यसे, अनुभूतिप्रागभावादेः विरुद्धस्य तत्समकालभावनियमोऽस्तीति। किं त्वया क्वचिदेवं दृष्टं येन नियमं ब्रवीषि, हन्त तर्हि तत एव दर्शनात्प्रागभावादिसिद्धिरिति न तद्भाव[1]निह्नवः, तत्प्रागभावं च तत्समकालवर्तिनमनुभवतः को ब्रवीति। इन्द्रियजन्यस्य प्रत्यक्षस्य ह्येव स्वभावनियमो यत् स्वसमानकालवर्तिनः पदार्थस्य ग्राहकत्वम्, न सर्वेषां ज्ञानानां प्रमाणानां च, स्मरणानुमानागमयोगिप्रत्यक्षादिषु कालान्तरवर्तिनोऽपि ग्रहणदर्शनात्। अत एव[2] प्रमाणस्य प्रमेयाविनाभावः। न हि प्रमाणस्य स्वसमकालवर्तिनाऽविनाभावोऽर्थसंबन्धः, अपि तु यद्देशकालादिसम्बन्धितया योऽर्थोऽवभासते तस्य तथाविधाकारमिथ्यात्वप्रत्यनीकता। अत इदमपि निरस्तं स्मृतिर्न बाह्यविषया नष्टेऽप्यर्थे स्मृतिदर्शनादिति। अथोच्येत, न तावत् संवित्प्रागभावः प्रत्यक्षावसेयः, अवर्तमानत्वात्। न च प्रमाणान्तरावसेयः, लिङ्गाद्यभावात्। न हि संवित्प्रागभावव्याप्तमिह लिङ्गमुपलभ्यते, नानुपपत्तिरपि कस्यचिद् दृश्यते, न चागमस्तद्विषयो दृष्टचरः। [3]अतस्तत्प्रागभावः प्रमाणा-

१ तद्भाव इति द्राविडपुस्तकपाठः। २ अत एव चेति पाठा०।

३ नानुपपत्तिरपि कस्यचिद् दृश्यते, इत्ययं द्राविडपुस्तके नोपलभ्यते पाठः।

भावादेव न सेत्स्यतीति । यद्येवं स्वतःसिद्धत्वविभवं [1]परित्यज्य प्रमाणाभावेऽवष्टब्धश्चेत्, योग्यानुपलब्ध्यैवाभावः समर्थित इत्युपशाम्यतु भवान् । किंच प्रत्यक्षज्ञानं स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयत् तस्य न सर्वदा सत्तामवगमयत् दृश्यत इति घटादेः पूर्वोत्तरकालसत्ता न प्रतीयते, तदप्रतीतिश्च संवेदनस्य कालपरिच्छिन्नतया प्रतीतेः । घटादिविषयमेव संवेदनं स्वयंकालानवच्छिन्नं प्रतीत चेत्, तत्संवेदनविषयो घटादिरपि कालानवच्छिन्नः प्रतीयत इति नित्यः स्यात् । नित्यं चेत्संवेदनं स्वतःसिद्धं नित्यमित्येव प्रतीयेत, न च तथा प्रतीयते । एवमनुमानादिसंविदोऽपि कालानवच्छिन्नाः प्रतीताश्चेत्, स्वविषयानपि कालानवच्छिन्नान् प्रकाशयन्तीति ते च सर्वे कालानवच्छिन्ना नित्याः स्युः, संविदनुरूपत्वाद्विषयाणाम् न च निर्विषया संवित् काचिदस्ति, अनुपलब्धेः । विषयप्रकाशनस्वभावतयैवोपलब्धेरेव हि संविदः स्वयंप्रकाशता समर्थिता, संविदो विषयप्रकाशनसत्ता[1]स्वभावविरहे सति स्वयंप्रकाशत्वासिद्धेः, अनुभूतेरनुभवान्तरानुभाव्यत्वाच्च संविदस्तुच्छतैव स्यात् । न च स्वापमदमूर्च्छादिषु सर्वविषयशून्या केवलैव संवित्परिस्फुरतीति वाच्यम्, योग्यानुपलब्धिपराहतत्वात् । तास्वपि दशास्वनुभूतिरनुभूता चेत्, तस्याः प्रबोधसमयेऽनुसंधानं स्यात्, न च तदस्ति । नन्वनुभूतस्य पदार्थस्य स्मरणनियमो न दृष्टचरः, अतः स्मरणाभावः कथमनुभवाभावमेव साधयेत् । उच्यते, निखिलसंस्कारतिरस्कृतिकरदेहविगमादिप्रबलहेतुविरहेऽप्यस्मरणनियमोऽनुभवाभावमेव साधयति । न केवलमस्मरणनियमादनुभवाभावः, सुप्तोत्थितस्यैतावन्तं कालं न किंचिदहमज्ञासिषमिति प्रत्यवमर्शेनैव सिद्धेः । न च सत्यप्यनुभवे तदस्मरणनियमो विषयावच्छेदविरहादहङ्कारविगमाद्वेति शक्यते वक्तुम्, अर्थान्तराननुभवस्यार्थान्तराभावस्य चानुभूतार्थान्तरास्मरणहेतुत्वाभावात् । तास्वपि दशास्वहमर्थोऽनुवर्तत इति च

---

१ स्वयंप्रकाशनसत्तास्वभावविरहे सति इति द्राविडपाठः ।

वक्ष्यते । ननु स्वापादिदशास्वपि सविशेषोऽनुभवोऽस्तीति पूर्वमुक्तम् । सत्यमुक्तम् । स त्वात्मानुभवः, स च सविशेष एवेति स्थापयिष्यते । इह तु सकलविषयविरहिणी निराश्रया च संविन्निषिध्यते । केवलैव संविदात्मानुभव इति चेत्, न सा च साश्रयेति सुपपादयिष्यते । अतोऽनुभूतिः सती स्वयं स्वप्रागभावं न साधयतीति प्रागभावासिद्धिर्न शक्यते वक्तुम् । अनुभूतेरनुभाव्यत्वमसम्भवापादनेनान्यतोऽप्यसिद्धिर्निरस्ता । तस्माच्च प्रागभावाद्यसिद्ध्या संविदोऽनुत्पत्तिरुपपत्तिमती । यदप्यस्याः अनुत्पत्त्या विकारान्तरनिरसनम्, तदप्यनुपपन्नम्, प्रागभावे व्यभिचारात् । तस्य हि जन्माभावेऽपि विनाशो दृश्यते । भावेष्विति विशेषणे तर्ककुशलता विफला भवति । तथा च भवदभिमताऽविद्याऽनुत्पन्नैव विविधविकारास्पदं तत्त्वज्ञानोदयादन्तवती चेति तस्यामनैकान्त्यम् । तद्विकाराः सर्वे मिथ्याभूता इति चेत् । किं भवतः परमार्थभूतोऽप्यस्ति विकारः, येनैतद्विशेषणमर्थवद्भवति । न ह्यसावभ्युपगम्यते । यदप्यनुभूतिरजत्वात्स्वस्मिन्विभागं न सहत इति, तदपि नोपपद्यते, अजस्यैवात्मनो देहेन्द्रियादिभ्यो विभक्तत्वात् अनादित्वेन चाभ्युपगताया अविद्याया आत्मनो व्यतिरेकस्यावश्याश्रयणीयत्वात् । स विभागो मिथ्यारूप इति चेत् । जन्मप्रतिषेधे परमार्थविभागः किं क्वचिद् दृष्टस्त्वया, अविद्याया आत्मनः परमार्थतो विभागाभावे हि वस्तुतोऽविद्यैव स्यादात्मा । अबाधितप्रतिपत्तिसिद्धदृश्यभेदसमर्थनेन दर्शनभेदोऽपि समर्थित एव, घटाभेदाच्छेदनभेदवत् । यदपि नास्या दृशेर्दृशिस्वरूपाया दृश्यः कश्चिदपि धर्मोऽस्ति, दृश्यत्वादेव तेषां न दृशिधर्मत्वमिति च, तदपि स्वाभ्युपगतैः प्रमाणसिद्धैर्नित्यत्वस्वयंप्रकाशत्वादिधर्मैरुभयमनैकान्तिकम् । न च ते संवेदनमात्रम्, स्वरूपभेदात् । स्वसत्तयैव स्वाश्रयं प्रति कस्यचिद्विषयस्य प्रकाशनं हि संवेदनम्, स्वयंप्रकाशता तु स्वसत्तयैव स्वाश्रयाय प्रकाशमानता, प्रकाशश्च चिदचिच्छेषपदार्थसाधारणो व्यवहारानुगुण्यम्, सर्वकालवर्तमानत्वं हि नित्यत्वम्, एकत्वमेकसंख्याऽवच्छेद इति । तेषां संवित्त्वाद्यभावरूपतायामपि तथाभूतैरपि तैश्चैतन्यधर्मभूतैर्व्यनैकान्त्यमपरिहार्यम् । संविदि तु स्वरूपातिरेकेण जडत्वा

द्विप्रत्यनीकत्वमित्यभावरूपो भावरूपो वा धर्मो नाभ्युपेतश्चेत्, तत्तन्निषेधोक्त्या किमपि नोक्तं भवेत् । अपि च संवित्सिद्ध्यति न वा । सिद्ध्यति चेत् सधर्मता स्यात्, नो चेत्, तुच्छता, गगनकुसुमादिवत् । सिद्धिरेव संविदिति चेत्, कस्य कं प्रतीति वक्तव्यम् । यदि न कस्यचित्कंचित्प्रति सा, तर्हि न सिद्धि[1], सिद्धिर्हि पुत्रत्वमिव कस्यचित्कंचित्प्रति भवति । आत्मन इति चेत्, कोऽयमात्मा । ननु संविदेवेत्युक्तम् । सत्यमुक्तम्, दुरुक्तं तु तत् । तथा हि कस्यचित्पुरुषस्य किंचिदर्थजातं प्रति सिद्धिरूपतया तत्सम्बन्धिनी सा संवित्स्वयं कथमिवात्मभावमनुभवेत् । एतदुक्तं भवति, अनुभूतिरिति स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभावो ज्ञानावगतिसंविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेषो घटमहं जानामीममर्थमवगच्छामि पटमहं संवेद्मीति सर्वेषामात्मसाक्षिकः प्रसिद्धः । एतत्स्वभावतया हि तस्याः स्वयंप्रकाशता भवताऽभ्युपपादिता, अस्य सकर्मकस्य कर्तृधर्मविशेषस्य कर्मभाववत् कर्तृत्वमपि दुर्घटमिति । तथा ह्यस्य कर्तुः स्थिरस्य कर्तृधर्मस्य संवेदनाख्यस्य सुखदुःखादेरिवोत्पत्तिस्थितिनिरोधाश्च प्रत्यक्षमीक्ष्यन्ते । कर्तुः स्थैर्ये तावत् स एवाहमिदं पूर्वं मयाऽनुभूत इति प्रत्यभिज्ञाप्रत्यक्षसिद्धम् । अहं जानाम्यहमज्ञासिषं ज्ञातुरेव ममेदानीं ज्ञानं नष्टमिति च संविदुत्पत्त्यादयः प्रत्यक्षसिद्धा इति कुतस्तदैक्यम् । एवं क्षणभङ्गिन्याः संविद आत्मत्वाभ्युपगमे पूर्वेद्युर्दृष्टं परेद्युरिदमहमदर्शमिति प्रत्यभिज्ञा च न घटते, अन्येनानुभूतस्य न ह्यन्येन प्रत्यभिज्ञानसम्भवः । किंचानुभूतेरात्मत्वाभ्युपगमे तस्या नित्यत्वेऽपि प्रतिसंधाना[2]सम्भवस्तदवस्थः । प्रतिसंधानं हि पूर्वापरकालस्थायिनमनुभवितारमुपस्थापयति नानुभूतिमात्रम्, अहमेवेदं पूर्वमप्यन्वभूवमिति । भवतोऽप्यनुभूतेर्न ह्यनुभवितृत्वमिष्टम्, अनुभूतिरनुभूतिमात्रमेव । आश्र-यामा काचिद्वित्तिरनाश्रया निर्विषया वाऽत्यन्तानुपलब्धेर्न सम्भवतीत्युक्तम् । उभयाभ्युपगता संविदेवात्मेत्युपलब्धिपराहतम् । अनुभूतिमात्रमेव परमार्थ

१ अपरस्थितिरिति द्राविडपाठः ।
२ प्रतिसंधानासंभवस्तदवस्थ इति द्राविडपाठः ।

इति निष्कर्षकहेत्वभावाच्च निराकृताः ॥

ननु चाहं जानामीत्यस्मत्प्रत्यये योऽनिदमंशः प्रकाशैकरसचित्स्वरूपस्स चात्मा, तस्मिन्नतुलनिर्भासितया युष्मदर्थेनतयोऽहं जानामीति सिद्ध्यदहमर्थोऽस्मिन्मात्रातिरेकी युष्मदर्थ एव । नैतदेवम्, अहं जानामीति धर्मधर्मितया प्रत्यक्षप्रतीतिविरोधादेव । किञ्च–

"अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत् ।
अहंबुद्ध्या पराग्रूपात्प्रत्यगर्थो हि भिद्यते ॥
निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट् ।
भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ॥
अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति ।
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥
मयि नष्टेऽपि मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता ।
इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ॥
स्वसम्बन्धितया ह्यस्याः, सत्ता विज्ञप्तितादि च ।
स्वसंबन्धवियोगे तु ज्ञप्तिरेव न सिध्यति ॥
छेत्तृच्छेद्यस्य चाभावे छेदनादेरसिद्धिवत् ।
अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ॥
विज्ञातारमरे केन[1] विजानीयादिति श्रुतिः ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति च स्मृतिः ॥
नात्माऽश्रुतेरित्यारभ्य सूत्रकारोऽपि वक्ष्यति ।
ज्ञोऽत एवेत्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम्" ॥

अहंप्रत्ययसिद्धो ह्यस्मदर्थः, युष्मत्प्रत्ययविषयो युष्मदर्थः । तत्राहं जानामीति सिद्धो ज्ञाता युष्मदर्थ इति वचनं जननी मे वन्ध्येतिवद्व्याहतार्थम् । न चासौ ज्ञाताऽहमर्थोऽन्याधीनप्रकाशः, स्वयंप्रकाशत्वात्, चैतन्यस्वभावता हि स्वयंप्रकाशता, यः प्रकाशस्वभावस्सो-

१ विज्ञातारमरे केन जानात्वेति च श्रुतिः इति द्राविडपाठः ।

ऽनन्याधीनप्रकाशः, दीपवत् । न हि दीपादेः स्वप्र[1]काशवत्तन्निर्भा-
सित्वेनाप्रकाशितत्वमन्याधीनप्रकाशत्वं च । किं तर्हि? दीपः प्रकाश-
स्वभावः स्वयमेव प्रकाशते, अन्यानपि प्रकाशयति प्रभया । एतदुक्तं
भवति, यथैकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते। यद्यपि प्रभा प्रभा-
वद्द्रव्यगुणभूता, तथाऽपि तेजोद्रव्यमेव, न शौक्ल्यादिवत् गुणः, स्वाश्र-
यादन्यत्रापि वर्तमानत्वाद्रूपवत्त्वाच्च । शौक्ल्यादिधर्मवैधर्म्यात्प्रकाशव-
त्त्वाच्च तेजोद्रव्यमेव नार्थान्तरम् । प्रकाशवत्त्वं च स्वस्वरूपस्यान्येषां
च प्रकाशकत्वात् । अस्यास्तु गुणत्वव्यवहारो नित्यतदाश्रयत्वतच्छेष-
त्वनिबन्धनः । न चाश्रयावयवा एव विशीर्णाः प्रसरन्तः प्रभेत्युच्यन्ते,
मणिद्युमणिप्रभृतीनां विनाशप्रसङ्गात् । दीपेऽप्यवयवविप्रसृतिः कदा-
चिदपि न स्यात्, न हि विसरणस्वभावावयवा दीपाश्चतुरङ्गुलमात्रं निय-
मेन पिण्डीभूता ऊर्ध्वमुद्गम्य ततः पश्चाद्युगपदेव तिर्यगूर्ध्वमधश्चैकरूपा
विशीर्णाः प्रसरन्तीति शक्यते वक्तुम् । अतः सप्रभाका एव दीपाः प्रति-
क्षणमुत्पन्ना विनश्यन्तीति पुष्कलकारणक्रमोपनिपातात्तद्विनाशे विनाशा-
च्चावगम्यते । प्रभायाः स्वाश्रयसमीपे प्रकाशाधिक्यमौष्ण्याधिक्यमित्या-
द्युपलब्धिव्यवस्थाप्यम्, अग्न्यादीनामौष्ण्यादिवत् । एवमात्मा चिद्रूप
एव चैतन्यगुणक इति । चिद्रूपता हि स्वयंप्रकाशता । तथा हि श्रुतयः
"स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरे
अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" "विज्ञानघन एव" "अ-
त्रायं पुरुषः स्वयंज्योतिर्भवति' "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते"
"अथ यो वेदेदं जिघ्राणीति स आत्मेति" "कतम आत्मा, योऽयं विज्ञान-
मयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" "एष हि द्रष्टा श्रोता रसयिता
घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" 'विज्ञातारमरे केन विजा-
नीयात्" "जानात्येवायं पुरुषः" "न पश्यो मृत्युं पश्यति न रोगं नोत
दुःखताम्" "स उत्तमः पुरुषः" "नोपजनं स्मरन्निदं शरीरम्" "एवमेवास्य

१ स्वप्रभावन्निर्भासितत्वेनाप्रकाशत्वमिति पुस्तकान्तरपाठः ।

परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति" "तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमय" इत्याद्याः । वक्ष्यति च "ज्ञोऽत एवे"ति । अतः स्वयंप्रकाशोऽयमात्मा ज्ञातैव न प्रकाशमात्रम् । प्रकाशत्वादेव कस्यचिदेव भवेत्प्रकाशः, प्रदीपादिप्रकाशवत् । तस्मादात्मा भवितुमर्हति संवित् । संविदनुभूतिज्ञानादिशब्दाः संबन्धिशब्दा इति च शब्दार्थविदः । न हि लोकवेदयोर्जानातीत्यादेरकर्मकस्याकर्तृकस्य च प्रयोगो दृष्टचरः । यच्चोक्तम्, अजडत्वात्संविदेवात्मेति, तत्रेदं प्रष्टव्यम्, अजडत्वमिति किमभिप्रेतम् । स्वसत्तायुक्तप्रकाशत्वमिति चेत् । तथा सति दीपादिष्वनैकान्त्यम्, संविदतिरिक्तप्रकाशधर्मानभ्युपगमेनासिद्धिर्विरोधश्च । अव्यभिचरितप्रकाशसत्ताकत्वमपि सुखादिषु व्यभिचारादिरस्तम् । यच्चान्येन सुखादिरव्यभिचरितप्रकाशोऽप्यन्यस्मै प्रकाशमानतया घटादिरिव जडत्वेनानात्मेति, ज्ञानं वा किं स्वस्मै प्रकाशते । तदपि ह्यन्यस्यैवाहमर्थस्य ज्ञातुरवभासते, अहं सुखीतिवत् जानाम्यहमिति । अतः स्वस्मै प्रकाशमानस्वरूपमजडत्वं संविद्यसिद्धम् । तस्मात्स्वात्मानं प्रति स्वसत्तयैव सिद्ध्यन्नजडोऽहमर्थ एवात्मा । ज्ञानस्यापि प्रकाशता तत्संबन्धायत्ता, तत्कृतमेव हि ज्ञानस्य सुखादेरपि स्वाश्रयचेतनं प्रति प्रकटत्वमितरं प्रत्यप्रकटत्वं च । अतो न ज्ञप्तिमात्रमात्मा, अपि तु ज्ञातैवाहमर्थः । अथ यदुक्तमनुभूतिः परमार्थतो निर्विषया निराश्रया च सती भ्रान्त्या ज्ञातृतयाऽवभासते रजततयेव शुक्तिर्निरधिष्ठानभ्रमानुपपत्तेरिति, तदयुक्तम्, तथा सत्यनुभवसामानाधिकरण्येनानुभविताऽहमर्थः प्रतीयेत—अनुभूतिरहमिति, पुरोऽवस्थितभास्वरद्रव्याद्याकारतया रजतादिरिव । अत्र तु पृथगवभासमानैवेयमनुभूतिरर्थान्तरमहमर्थं विशिनष्टि, दण्ड इव देवदत्तम्, तथा ह्यनुभवाम्यहमिति प्रतीतिः । तदेवमस्मदर्थमनुभूतिविशिष्टं प्रकाशयन्ननुभवाम्यहमिति प्रत्ययो दण्डमात्रे दण्डी देवदत्त इति प्रत्ययवत् विशेषणभूतानुभूतिमात्रावलम्बनः कथमिव प्रतिज्ञायेत । यदप्युक्तम्, स्थूलोऽहमित्यादिदेहात्माभिमानवत एव ज्ञातृत्वप्रतिभासनात् ज्ञातृत्वमपि मिथ्येति, तदयुक्तम्, आत्मतयाऽभिमततया अनुभूतेरपि मिथ्यात्वं

स्यात्, न तु तथा प्रतीतिः। सकलेतरोपमर्दितत्वज्ञानाबाधितत्वेनानुभूतेर्मिथ्यात्वमिति चेत्। हन्तैवं सति तद्बाधादेव ज्ञातृत्वमपि न मिथ्या। यदप्युक्तम्, अविक्रियस्यात्मनो ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं न संभवति, अतो ज्ञातृत्वं विक्रियात्मकं जडं विकारास्पदाव्यक्तपरिणामाहङ्कारग्रन्थिस्थमिति न ज्ञातृत्वमात्मनः, अपि त्वन्तःकरणरूपाहङ्कारस्य। कर्तृत्वादिविशिष्टरूपादिवत् दृश्यधर्मः,। कर्तृत्वेऽहंप्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येवानात्मत्वपरागर्थत्वजडत्वादिप्रसङ्गश्चेति। नैतदुपपद्यते, देहस्येवाचेतनत्वप्रकृतिपरिणामित्वदृश्यत्वपरागर्थत्वादियोगादन्तःकरणरूपस्याहङ्कारस्य, चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्य। एतदुक्तं भवति- यथा देहादेर्दृश्यत्वपरार्थत्वादिभिर्हेतुभिस्तस्यात्मनो द्रष्टृत्वासंभवो विविच्यते, एवमन्तःकरणरूपाहङ्कारोऽपि तद्द्रष्टृत्वस्यासंभवस्तैरेव हेतुभिस्तस्माद्विविच्यत इति। अतो विरोधादेव न ज्ञातृत्वमहङ्कारस्य, दृश्यत्ववत्। यथा दृश्यत्वं तत्कर्मणोऽहङ्कारस्य नाभ्युपगम्यते, तथा ज्ञातृत्वमपि न तत्कर्मणोऽभ्युपगन्तव्यम्। न च ज्ञातृत्वं विक्रियात्मकम्, ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वम्, ज्ञानं चास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यम्, नित्यत्वं चात्मनो "नात्माऽश्रुतेः"इत्यादिषु वक्ष्यति, 'ज्ञोऽत एव"इत्यत्र ज्ञ इति व्यपदेशेन ज्ञानाश्रयत्वं च स्वाभाविकमिति वक्ष्यति। अस्य ज्ञानस्वरूपस्यैव मणिप्रभृतीनां प्रभाश्रयत्वमिव ज्ञानाश्रयत्वमप्यविरुद्धमित्युक्तम्। स्वयमपरिच्छिन्नमेव ज्ञानं सङ्कोचविकासार्हमित्युपपादयिष्यामः। अतः क्षेत्रज्ञावस्थायां कर्मणा संकुचितस्वरूपं तत्तत्कर्मानुगुणतरतमभावेन वर्तते, तच्चेन्द्रियद्वारेण व्यवस्थितम्। तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्योदयास्तमयव्यपदेशः प्रवर्तते, ज्ञानप्रसरे तु कर्तृत्वमस्त्येव, तच्च न स्वाभाविकम् अपि तु कर्मकृतमित्यविक्रियस्वरूप एवात्मा। एवंरूपाविक्रियात्मकं ज्ञातृत्वं ज्ञानस्वरूपस्यात्मन एवेति न कदाचिदपि जडस्याहङ्कारस्य ज्ञातृत्वसंभवः। जडस्वभावस्याहङ्कारस्य चित्संनिधानेन तच्छायापत्त्या तत्संभव इति चेत्। केयं चिच्छायापत्तिः। किमहङ्कारच्छायापत्तिः संविदः, उत संविच्छायापत्तिरहङ्कारस्य। न तावत् संविदः, संविदि ज्ञातृत्वानभ्युपगमात्। नाप्य

हङ्कारस्य, तस्य जडस्योपकरणतया ज्ञातृत्वायोगात्, द्वयोरप्य-चाक्षुषत्वाच्च । न ह्यचाक्षुषाणां छाया दृष्टा । अथाग्निसंपर्का-दयःपिण्डोऽप्ययवत् चित्संपर्काद् ज्ञातृत्वोपलब्धिरिति । नैतत्, संविदि वास्तवज्ञातृत्वानभ्युपगमादेव न तत्संपर्कादहङ्कारे ज्ञातृत्वं तदुपलब्धिर्वा, अहङ्कारस्य स्वचेतनस्य ज्ञातृत्वासंभ-वादेव सुतरां न तत्संपर्कात्संविदि ज्ञातृत्वं तदुपलब्धिर्वा । यदप्युक्तम्, उभयत्र वस्तुतो न ज्ञातृत्वमस्ति, अहङ्कारस्त्वनु-भूतेरभिव्यञ्जकः स्वात्मस्थामेवानुभूतिमभिव्यनक्ति आदर्शा-दिवदिति, तदयुक्तम्, आत्मनः स्वयंज्योतिषो जडस्वरूपाह-ङ्काराभिव्यङ्ग्यत्वायोगात् । तदुक्तम्—

“शान्ताङ्गार इवादित्यमहङ्कारो जडात्मकः ।
स्वयंज्योतिषमात्मानं व्यनक्तीति न युक्तिमत्” ॥ इति ॥

स्वयंप्रकाशानुभवाधीनसिद्धयो हि सर्वे पदार्थास्तत्र तदायत्त-प्रकाशोऽचिदहङ्कारोऽनुदितानस्तमितस्वरूपप्रकाशमशेषार्थसि-द्धिहेतुभूतमनुभवमभिव्यनक्तीत्यात्मविदः परिहसन्ति । किंचा-हङ्कारानुभवयोः स्वभावविरोधादनुभूतेरनुभूतित्वप्रसङ्गाच्च न व्यङ्ग्यव्यञ्जकभावः । यथोक्तम्—

“व्यङ्ग्यव्यञ्जकत्वमन्योन्यं न च स्यात्प्रातिकूल्यतः ।
व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्यात् यथा घटे” ॥इति॥

न च रविकरनिकराणां स्वाभिव्यङ्ग्यकरतलाभिव्यञ्जकत्ववत् संविदभिव्यञ्जकाहङ्काराभिव्यञ्जकत्वं संविदः साधीयः, तत्रापि रविकरनिकराणां करतलाभिव्यञ्जकत्वाभावात् । करतलप्रतिह-तगतयो हि रश्मयो बहुलाः स्वयमेव स्फुटतरमुपलभ्यन्त इति तद्बाहुल्यमात्रहेतुत्वात्करतलस्य नाभिव्यञ्जकत्वम् । किंचास्य संविद्रूपस्यात्मनोऽहङ्कारनिर्वर्त्योऽभिव्यक्तिः किंरूपा ?। नताव-दुत्पत्तिः, स्वतःसिद्धतयाऽनन्योत्पाद्यत्वाभ्युपगमात् । नापि तत्प्रकाशनं, तस्या अनुभवान्तरानुभाव्यत्वात् । तत एव च न तदनुभवसाधनानुग्रहः । स हि द्विधा । ज्ञेयस्येन्द्रियसंबन्धहे-तुत्वेन वा, यथा जातिनिजमुखादिग्रहणे व्यक्तिदर्पणादीनां नय-नादीन्द्रियसंबन्धहेतुत्वेन । बोद्धृगतकल्मषापनयनेन वा, यथा परतत्त्वावबोधनसाधनस्य शास्त्रस्य शमदमादिना । यथोक्तम्—

“करणानामप्रभूतित्वाच्च तत्संबन्धहेतुता” ॥ इति ।

किंचानुभूतेरनुभाव्यत्वाभ्युपगमेऽप्यहमर्थेन न तदनुभवसाधनानुग्रहः सुवचः, स ह्यनुभाव्यानुभवोत्पत्तिप्रतिबन्धकनिरसनेन भवेत्, यथा रूपादिग्रहणोत्पत्तिविरो(१)धिसन्तमसनिरसनेन चक्षुषो दीपादिना । न चेह तथाविधं निरसनीयं संभाव्यते । न तावत् संविदाश्रयगतं तदज्ञानोत्पत्तिविरो(२)धि किंचिदप्यहङ्कारापनेयमस्ति । अस्ति ह्यज्ञानमिति चेत् । न, अज्ञानस्याहङ्कारापनोद्यत्वानभ्युपगमात्, ज्ञानमेव ह्यज्ञानस्य निवर्तकम् । न च संविदाश्रयत्वमज्ञानस्य संभवति, ज्ञानसमानाश्रयत्वात्स्वसमानविषयत्वाच्च । ज्ञातृभावविषयभावविरहिते ज्ञानमात्रे साक्षिणि नाज्ञानं भवितुमर्हति । यथा ज्ञानाश्रयत्वप्रसक्तिशून्यत्वेन घटादेर्नाज्ञानाश्रयत्वं, तथा ज्ञानमात्रेऽपि ज्ञानाश्रयत्वाभावेन नाज्ञानाश्रयत्वं स्यात् । संविदोऽज्ञानाश्रयत्वाभ्युपगमेऽप्यात्मतयाऽभ्युपेतायास्तस्या ज्ञानविषयत्वाभावेन ज्ञानेन न तद्गताज्ञाननिवृत्तिः । ज्ञानं हि स्वविषय एवाज्ञानं निवर्तयति, यथा रज्ज्वादौ । अतो न केनापि कदाचित्संविदाश्रयमज्ञानमुच्छिद्येत । अस्य च सदसदनिर्वचनीयस्याज्ञानस्य स्वरूपमेव दुर्निरूपमित्युपरिष्टाद्वक्ष्यते । ज्ञानप्रागभावरूपस्य त्वज्ञानस्य ज्ञानोत्पत्तिविरोधित्वाभावेन न तन्निरसनेन तत्कारणानुग्रहः । अतो न केनापि प्रकारेणाहङ्कारेणानुभूतेरभिव्यक्तिः । न च स्वाश्रयतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः, प्रदीपादिष्वदर्शनात्, तथाऽवस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्याच्च ज्ञानतत्साधनयोरनुग्राहकस्य च । तच्च स्वतः प्रामाण्यं न्यायसिद्धम् । न च दर्पणादिर्मुखादेरभिव्यञ्जकः, अपि तु चाक्षुषतेजःप्रतिफलनरूपदोषहेतुः, तद्दोषकृतश्च तत्रान्यथाऽवभासः, अभिव्यञ्जकस्त्वालोकादिरेव । न चेह तथाऽहङ्कारेण संविदि स्वप्रकाशायां तादृशदोषापादनं सम्भवति । व्यक्तेस्तु जातिराकार इति तदाश्रयतया प्रतीतिः, न तु व्यक्तिव्यङ्ग्यत्वात् । अतोऽन्तःकरणभूताहङ्कारस्थतया संविदुपलब्धेर्वस्तुतो दोषतो

१ निरोधितमसनिरसनेनेति पाठान्तरम् ।

२ निरोधीति पाठान्तरम् ।

वा न किञ्चिदिह कारणमिति नाहङ्कारस्य ज्ञातृत्वं तथोपलब्धिपर्वा । तस्मात् स्वत एव ज्ञातृतया सिद्ध्यदहमर्थ एव प्रत्यगात्मा, न ज्ञप्तिमात्रम् । अहंभावविगमे तु ज्ञप्तेरपि न प्रत्यक्त्वसिद्धिरित्युक्तम् । तमोगुणाभिभवात्परागर्थानुभवाभावात्तु अहमर्थस्य विविक्तस्फुटप्रतिभासाभावेऽप्याप्रबोधादहमित्येकाकारेणात्मनः स्फुरणात्सुषुप्तावपि नाहंभावविगमः । भवदभिमतायाः अनुभूतेरपि तथैव प्रथेति वक्तव्यम् । न हि सुप्तोत्थितः कश्चिदहं भावविधुरखण्डाकारप्रत्यस्तमिताकारा ज्ञप्तिरहमज्ञानसाक्षितयाऽवतिष्ठत इत्येवंविधां स्वापसमकालामनुभूतिं परामृशति । एवं हि सुप्तोत्थितस्य परामर्शः सुखमहमस्वाप्समिति । अनेन प्रत्यवमर्शेन तदानीमप्यहमर्थस्यैवात्मनः सुखित्वं ज्ञातृत्व [illegible] ज्ञायते । न च वाच्यं यथेदानीं सुखं भवति तथा तदानीमप्यस्वाप्समित्येषा प्रतिपत्तिरिति, अतद्रूपत्वात्प्रतिपत्तेः । न चाहमर्थ-स्यात्मनोऽस्थिरत्वेन तदानीमहमर्थस्य सुखित्वानुसंधानानुपपत्तिः, यतः सुषुप्तिदशायां प्रागनुभूतं वस्तु सुप्तोत्थितो मयेदं कृतं मयेदमनुभूतमहमेवेदमबोधमिति परामृशति । एतावन्तं कालं न किञ्चिदहमज्ञासिषमिति च परामृशतीति चेत् । ततः किम् । न किंचिदिति कृत्स्नप्रतिषेध इति चेत् । न, अहमवेदिषमिति वेदितुरहमर्थस्यानुवृत्तेः, वेद्यविषयो हि स प्रतिषेधः । न किञ्चिदिति निषेधस्य कृत्स्नविषयत्वे भवदभिमतानुभूतिरपि प्रतिषिद्धा स्यात् । सुषुप्तिसमयेऽप्यनुसधीयमानमहमर्थमात्मानं ज्ञातारमहमिति परामृश्य न किंचिदवेदिषमिति वेदने तस्य प्रतिषिध्यमाने तस्मिन्काले निषिद्धमानाया वित्तेः सिद्धिमनुवर्तमानस्य ज्ञातुरहमर्थस्य चासिद्धिमनेनैव न किञ्चिदहमवेदिषमिति परामर्शेन साधयंस्तमिममर्थं देवानामेव साधयतु । मामप्यहं न ज्ञातवानित्यहमर्थस्यापि तदानीमननुसंधानं प्रतीयत इति चेत् । स्वानुभववचनयोर्विरोधमपि ना(१)नन्ति भवन्तः । अहं मां न ज्ञातवानिति ह्यनुभववचने मामिति किं निषिद्ध्यत इति चेत् । साधु पृष्टं त्वया । तदुच्यते, अहमर्थस्य ज्ञातुरनुवृत्तेर्न स्वरूपं

(१) न जानातीति प [illegible] ।

नपिच्यते, अपि, तु प्रबोधसमयेऽनुसंधीयमानस्याहमर्थस्य वर्णाश्रमादिविशिष्टता। अहं मां न ज्ञातवानित्युक्तेर्विषयो विवेचनीयः। जागरितावस्थानुसंहितजात्यादिविशिष्टोऽस्मदर्थो मामित्यंशस्य विषयः। स्वापाव(१)स्थाप्रसिद्धोऽविशदस्वानुभविकतानश्चाहमर्थोऽहमित्यंशस्य विषयः। अत्र सुप्तोऽहमीदृशोऽहमिति न स्मरामि न ज्ञातवानहमित्येव खल्वनुभवप्रकारः। किञ्च सुषुप्तावात्माऽज्ञानसाक्षित्वेनाऽऽस्त इति हि भवदीया प्रक्रिया। साक्षित्वं च साक्षाज्ज्ञातृत्वमेव, न ह्यजानतः साक्षित्वम्। ज्ञातैव लोकवेदयोः साक्षीति व्यपदिश्यते, न ज्ञानमात्रम्। स्मरति च भगवान् पाणिनिः "साक्षाद् द्रष्टरि संज्ञायाम्" इति साक्षाज्ज्ञातर्येव साक्षिशब्दम्। स चायं साक्षी जानामीति प्रतीयमानोऽस्मदर्थ एवेति कुतस्तदानीमहमर्थो न प्रतीयेत। आत्मने स्वयमवभासमानोऽहमित्येवावभासत इति स्वापाद्यवस्थास्वप्यात्मा प्रकाशमानोऽहमित्येवावभासत इति सिद्धम्। यत्तु मोक्षदशायामहमर्थो नानुवर्तत इति, तदपेशलम्। तथा सति आत्मनाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातः स्यात्। न चाहमर्थो धर्ममात्रं, येन तद्विगमेऽप्यविद्यानिवृत्ताविव स्वरूपमवतिष्ठेत, प्रत्युत स्वरूपमेवाहमर्थ आत्मनः। ज्ञानं तु तस्य धर्मः, अहं जानामि ज्ञानं मे जातमिति चाहमर्थधर्मतया ज्ञानप्रतीतेरेव। अपि च यः परमार्थतो भ्रान्त्या वाऽऽध्यात्मिकादिदुःखैर्दुःखितमात्मानमनुसंधत्ते—अहं दुःखीति—सर्वमेतत् दुःखजातमपुनर्भवमपोह्य कथमहमनाकुलः स्वस्थो भवेयमित्युत्पन्नमोक्षरागः स एव तत्साधने प्रवर्तते। स साधनानुष्ठानेन यद्यहमेव न भविष्यामीत्यवगच्छेदपसर्पेदेवासौ मोक्षकथाप्रस्तावात्। ततश्चाधिकारिविरहादेव सर्वं मोक्षशास्त्रमप्रमाणं स्यात्। अहमुपलक्षितं प्रकाशमात्रमपवर्गेऽवतिष्ठत इति चेत्, किमनेन। मयि विनष्टेऽपि किमपि प्रकाशमात्रमवतिष्ठत इति मत्वा न हि कश्चिद्बुद्धिपूर्वकारी प्रयतते। अतोऽहमर्थस्यैव ज्ञातृतया सिद्ध्यतः प्रत्यगात्मत्वम्। स च प्रत्यगात्मा मुक्तावप्यहमित्येव प्रकाशते,

(१) स्वाप्ययावस्थाप्रसिद्ध इति द्राविडपाठः।

स्वस्मै प्रकाशमानत्वात् । यो यः स्वस्मै प्रकाशते स सर्वोऽहमित्येव प्रकाशते यथा, तथाऽवभासमानत्वेन उभयवादिसिद्धः संसार्यात्मा । यः पुनरहमिति न प्रकाशते नासौ स्वस्मै प्रकाशते, यथा घटादिः, स्वस्मै प्रकाशते तथा चायं मुक्तात्मा, तस्मादहमित्येव प्रकाशते । न चाहमिति प्रकाशमानत्वेन तस्याज्ञत्वसंसारित्वादिप्रसङ्गः, मोक्षविरोधादज्ञत्वाद्यहेतुत्वाच्चाहंप्रत्ययस्य । अज्ञानं नाम स्वरूपाज्ञानमन्यथाज्ञानं विपरीतज्ञानं वा । अहमित्येवात्मनः स्वरूपमिति स्वरूपज्ञानरूपोऽहंप्रत्ययो नाज्ञत्वमावहति, कुतः संसारित्वम्, अपि तु तद्विरोधित्वान्नाशयत्येव, ब्रह्मात्मभावापरोक्षनिर्धूतनिरवशेषाविद्यानामपि वामदेवादीनामहमित्येवात्मानुभवदर्शनाच्च । श्रूयते हि "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे, अहं मनुरभवं सूर्यश्च" इति, "अहमेव च संवर्तामि भविष्यामि" इत्यादि । सकलेतराज्ञानविरोधिनः सच्छब्दप्रत्ययमात्रभाजः परस्य ब्रह्मणो व्यवहारोऽप्येवमेव "हन्ताहमिमास्तिस्रो देवताः" "बहु स्यां प्रजायेय" "स ऐक्षत लोकान्नु सृजा" इति, तथा

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" ॥
"अहमात्मा गुडाकेश" "न त्वेवाहं जातु नासम्"
"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" ।
"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" ॥
"तेषामहं समुद्धर्ता मृत्युसंसारसागरात्" ।
"अहं बीजप्रदः पिता" "वेदाहं समतीतानि"

इत्यादिषु । यद्यहमित्येवात्मनः स्वरूपं, कथं तर्ह्यहङ्कारस्य क्षेत्रान्तर्भावो भगवतोपदिश्यते ।

"महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च" इति ।

उच्यते, स्वरूपोपदेशेषु सर्वेष्वहमित्येवोपदेशात्तथैवात्मस्वरूपप्रतिपत्तेश्चाहमित्येव प्रत्यगात्मनः स्वरूपम् । अव्यक्तपरिणामभेदस्याहङ्कारस्य क्षेत्रान्तर्भावो भग(१)वतोपदिश्यते, स त्वनात्मनि देहेऽहंभावकरणहेतुत्वेनाहङ्कार इत्युच्यते । अस्य त्वहङ्कारशब्दस्याभूततद्भावेऽर्थे च्विप्रत्ययमुत्पाद्य व्युत्प-

१ भगवतैवोपदिश्यत इति पुस्तकान्तरम् ।

सिद्धेष्टव्या । अयमेव ह्यहङ्कार उत्कृष्टजनावमानहेतुर्गर्वापरनामा शास्त्रेषु बहुशो हेयतया प्रतिपाद्यते । तस्माद्बाधकापेतोऽहंबुद्धिः साक्षादात्मगोचरैव । शरीरगोचरा त्वहंबुद्धिरविद्यैव, यथोक्तं भगवता पराशरेण ।

"श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ।
अनात्मन्यात्मबुद्धिर्या" ॥ इति ।

यदि ज्ञप्तिमात्रमेवात्मा, तदाऽनात्मन्यात्माभिमाने शरीरे ज्ञप्तिमात्रप्रतिभासः स्यान्न ज्ञातृत्वप्रतिभासः । तस्मात् ज्ञाताऽहमर्थ एवात्मा । तदुक्तम् ।

"अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात् ।
अविद्यायोगतश्चात्मा ज्ञाताऽहमिति भासते" ॥ इति

तथा च ।

"देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी" ॥ इति ।

अनन्यसाधनः=स्वप्रकाशः, व्यापी=अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशस्वभावः ।

यदुक्तं, दोषमूलत्वेनान्यथासिद्धिसंभावनया सकलभेदावलम्बिप्रत्यक्षस्य शास्त्रबाध्यत्वमिति । कोऽयं दोष इति वक्तव्यं, यन्मूलतया प्रत्यक्षस्यान्यथासिद्धिः । अनादिभेदवासनैव हि दोष इति चेत् । भेदवासनायास्तिमिरादिवत् यथावस्थितवस्तुविपरीतज्ञानहेतुत्वं किमन्यत्र ज्ञातपूर्वम् । अनेनैव शास्त्रविरोधेन ज्ञास्यत इति चेत् । न, अन्योन्याश्रयणात्, शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चये सति भेदवासनाया दोषत्वनिश्चयो भेदवासनाया दोषत्वनिश्चये सति शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चय इति । किञ्च यदि भेदवासनामूलत्वेन प्रत्यक्षस्य विपरीतार्थत्वं, शास्त्रमपि तन्मूलत्वेन तथैव स्यात् । अथोच्येत, दोषमूलत्वेऽपि शास्त्रस्य प्रत्यक्षावगतसकलभेदनिरसनज्ञानहेतुत्वेन परत्वात् तत् प्रत्यक्षस्य बाधकमिति । तन्न, दोषमूलत्वे ज्ञाते सति परत्वमकिञ्चित्करम् । रज्जुसर्पज्ञाननिमित्तभये सति भ्रान्तोऽयमिति

परिज्ञा(१)नेन केनचिदाप्तेन सर्पो मा भैषीरित्युक्तेऽपि भया-निवृत्तिदर्शनात् । शास्त्रस्य च दोषमूलत्वं श्रवणवेलायामेव ज्ञातं, श्रवणावगतनिखिलभेदोपमर्दिब्रह्मात्मैकत्वविज्ञानाऽन्यथा-नुपपत्त्याऽनन्तरादेः । अपि चेदं(२)शास्त्रमसंभाव्यमानदोषं, प्रत्यक्षं तु संभाव्यमानदोषमिति केनावगतं त्वया । न तावत् स्वतःसिद्धा निर्धूतनिखिलभेदविशेषानुभूतिरिममर्थमवगमयति, तस्याः सर्वविषयविरक्तत्वादज्ञातपक्षपातविरहाच्च । नाप्यैन्द्रियकं प्रत्यक्षं, दोषमूलत्वेन विपरीतार्थत्वात्, तन्मूलत्वादेव नान्यान्यपि प्रमाणानि । अत स्वपक्षसाधकप्रमाणानभ्युपगमाच्च स्वाभिमतार्थसिद्धिः । ननु व्यावहारिकप्रमाणप्रमेयव्यवहारोऽस्माकमप्यस्त्येव । कोऽयं व्यावहारिको नाम । आपातप्रतीतिसिद्धो युक्तिभिर्निरूपितो न तथाऽवस्थित इति चेत् । किं तेन प्रयोजनम् । प्रमाणतया प्रतिपन्नेऽपि यौक्तिकबाधादेव प्रमाणकार्याभावात् । अथोच्येत, शास्त्रप्रत्यक्षयोर्द्वयोरप्यविद्यामूलत्वेऽपि प्रत्यक्षविषयस्य शास्त्रेण बाधो दृश्यते, शास्त्रविषयस्य सद्द्वितीयस्य ब्रह्मणः पश्चात्तनबाधादर्शनेनैव निर्विशेषानुभूतिमात्रं ब्रह्मैव परमार्थं इति । तदयुक्तम्, अबाधितस्यापि दोषमूलस्यापारमार्थ्यनिश्चयात् । एतदुक्तं भवति यथा नक्रोडनक्रकाचादिदोषरहितपुरुषान्तरागोचरगिरिगुहासु वसतस्तैमिरिकस्यासाध्यतिमिरस्य सर्वस्यापि तिमिरदोषाविशेषेण द्विचन्द्रज्ञानमविशिष्टं जायते तत्र च बाधकप्रत्ययोऽस्तीति न तन्मिथ्या न भवतीति तद्विषयभूतं चन्द्रद्वित्वमपि मिथ्यैव, दोषो ह्ययथार्थज्ञानहेतुः, तथा ब्रह्मज्ञानमविद्यामूलत्वेन बाधकज्ञानरहितमपि स्वविषयेण ब्रह्मणा सह मिथ्यैवेति । भवन्ति चात्र प्रयोगाः, विवादाध्यासितं ब्रह्म मिथ्याऽविद्याद्युत्पन्नज्ञानविषयत्वात्, प्रपञ्चवत्, ब्रह्म मिथ्याज्ञानविषयत्वात्, प्रपञ्चवत्, ब्रह्म मिथ्याऽसत्यहेतुजन्यज्ञानविषयत्वात्, प्रपञ्चवदेव । न च वाच्यं स्वाप्नस्य हस्त्यादिज्ञानस्यासत्यस्य परमार्थशुभाशुभप्रतिपत्तिहेतुभाववत् अविद्यामूलत्वेनासत्यस्यापि शास्त्रस्य परमार्थभूतब्रह्मविषयप्रतिपत्तिहे-

(१) परिज्ञानेन इति पुस्तकान्तरपाठः ।
(२) अपि चेदं शास्त्रम् एतच्चासंभाव्यमानदोषमिति द्राविडपाठः ।

तुभावौ न विरुद्ध इति, स्वप्नज्ञानस्यासत्यत्वाभावात्। तत्र हि विषयाणामेव मिथ्यात्वं, तेषामेव हि बाधो दृश्यते न ज्ञानस्य। न हि मया स्वप्नवेलायामनुभूतं ज्ञानमिह न विद्यत इति कस्यचिदपि प्रत्ययो जायते, "दर्शनं तु विद्यते, अर्था न सन्ति" इति बाधकप्रत्ययः। मायाविनो मन्त्रौषधादिप्रभवं मायामयं ज्ञानं सत्यमेव प्रीतेर्भयस्य च हेतुः, तत्रापि ज्ञानस्याबाधितत्वात्। विषयेन्द्रियादिदोषजन्यं रज्ज्वादौ सर्पादिविज्ञानं सत्यमेव भयादिहेतुः, सत्यैवादष्टेऽपि स्वात्मनि सर्पसंनिधानात् दष्टबुद्धिः। सत्यैव शङ्काविषबुद्धिर्मरणहेतुभूता। वस्तुभूत एव जलादौ मुखादिप्रतिभासो वस्तुभूतमुखगतविशेषनिश्चयहेतुः। एतेषां संवेदनानामुत्पत्तिमत्त्वादर्थक्रियाकारित्वाच्च सत्यत्वमवगम्यते। हस्त्यादीनामभावेऽपि कथं तद्बुद्धयः सत्या भवन्तीति चेत्। नैतत्, बुद्धीनां सालम्बनत्वमात्रनियमात्। अर्थस्य प्रतिभासमानस्यैव ह्यालम्बनत्वेऽपेक्षितं, प्रतिभासमानता चास्त्येव दोषवशात्, स तु बाधितोऽसत्य इत्यवगम्यते, अबाधिता हि बुद्धिः सत्यैवेत्युक्तम्। रेखया वर्णप्रतिपत्तावपि नासत्यात्सत्यबुद्धिः, रेखायाः सत्यत्वात्। ननु वर्णात्मना प्रतिपन्ना रेखा वर्णबुद्धिहेतुः, वर्णात्मता त्वसत्या। नैव, वर्णात्मताया अस्वसत्त्याया उपायत्वायोगात्। असतो निरुपाख्यस्य ह्युपायत्वं न दृष्टमनुपपन्नं च। अथ तस्या वर्णबुद्धेरुपायत्वम्। एवं तर्ह्यसत्यात्सत्यबुद्धिर्न स्यात् बुद्धेः सत्यत्वादेव, उपायोपेययोरैक्यप्रसङ्गश्च, उभयोर्वर्णबुद्धित्वाविशेषात्। रेखाया अविद्यमानवर्णात्मनोपायत्वे चैकस्यामेव रेखायामविद्यमानसर्ववर्णात्मकत्वस्य सुलभत्वादेकरेखादर्शनात्सर्ववर्णप्रतिपत्तिः स्यात्। अथ पिण्डविशेषे देवदत्तादिशब्दसङ्केतवत् चक्षुर्ग्राह्यरेखाविशेषे श्रोत्रग्राह्यवर्णविशेषसङ्केतवशाद्रेखाविशेषो वर्णविशेषबुद्धिहेतुरिति। हन्त तर्हि सत्यादेव सत्यप्रतिपत्तिः, रेखायाः सङ्केतस्य च सत्यत्वात्। रेखागवयादपि सत्यगवयबुद्धिः सादृश्यनिबन्धना, सादृश्यं च सत्यमेव। न चैकरूपस्य शब्दस्य नादविशेषेणार्थभेदबुद्धिहेतुत्वेऽप्यसत्यात्सत्यप्रतिपत्तिः, नानानादाभिव्यक्तस्यैव शब्दस्य तत्तन्नादाभिव्यक्तस्वरूपेणार्थविशेषेषु संबन्धग्रहणवशादर्थभेदबु-

दुष्टत्वसिद्धहेतुत्वात् । शब्दस्यैकरूपत्वमपि न साधीयः, गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात् । अतोऽसत्याच्छास्त्रात्सत्यब्रह्मविषयप्रतिपत्तिर्दुरुपपादा । ननु शास्त्रस्य न गगनकुसुमवदत्यन्तासत्यत्वं, प्रागद्वैतज्ञानात्सद्बुद्धिबोध्यत्वात्, उत्पन्ने त्वद्वैतज्ञाने ह्यसत्यत्वं शास्त्रस्य, न तदा शास्त्रं निरस्तनिखिलभेदचिन्मात्रब्रह्मज्ञानोपायः, यदोपायस्तदाऽस्त्येव शास्त्रमस्तीति बुद्धेः । नैवम्, असति शास्त्रेऽस्ति शास्त्रमिति बुद्धेर्मिथ्यात्वात् । ततः किम् । इदं ततः, मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन तद्विषयस्यापि ब्रह्मणो मिथ्यात्वम्; यथा धूमबुद्ध्यागृहीतबाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्वम् । पश्चात्तनबाधादर्शनं चासिद्धं शून्यमेव तत्त्वमिति वाक्येन तस्यापि बाधदर्शनात् । तत्तु भ्रान्तिमूलमिति चेत् । एतदपि भ्रान्तिमूलमिति त्वयैवोक्तं पश्चात्तनबाधादर्शनं तु तस्यैवेत्यलमप्रतिष्ठितकुतर्कपरिहसनेन ॥

यदुक्तं वेदान्तवाक्यानि निर्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपराणि "सदेव सोम्येदमग्र आसीत्" इत्येवमादीनीति, तदयुक्तम्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणो जगदुपादानत्वं जगन्निमित्तत्वं सर्वज्ञता सर्वशक्तियोगः सत्यसङ्कल्पत्वं सर्वान्तरत्वं सर्वाधारत्वं सर्वनियमनमित्याद्यनेककल्याणगुणविशिष्टतां कृत्स्नस्य जगतस्तदात्मकतां च प्रतिपाद्य एवं भूतब्रह्मात्मकस्त्वमसीति श्वेतकेतुं प्रत्युपदेशाय प्रवृत्तत्वात्प्रकरणस्य । प्रपञ्चितश्चायमर्थो वेदार्थसङ्ग्रहे । अत्राप्यारम्भणाधिकरणे निपुणतरमुपपादयिष्यते । "अथ परा यया तदक्षरमधिगम्यते" इत्यत्रापि प्रकृतान् हेयगुणान् प्रतिषिध्य नित्यत्वविभुत्वसूक्ष्मत्वसर्वगतत्वाव्ययत्वभूतयोनित्वसर्वज्ञत्वादिकल्याणगुणयोगः परस्य ब्रह्मणः प्रतिपादितः । "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्रापि सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थाभिधानव्युत्पत्त्या न निर्विशेषवस्तुसिद्धिः । प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वं हि सामानाधिकरण्यम् । तत्र सत्यज्ञानादिपदमुख्यार्थैर्गुणैस्तत्तद्गुणविरोध्याकारप्रत्यनीकाकारैर्वा एक-

स्मिन्नेवार्थे पदानां प्रवृत्तौ निमित्तभेदोऽवश्याश्रयणीयः । इयांस्तु विशेषः, एकस्मिन् पक्षे पदानां मुख्यार्थता, अपरस्मिंश्च तेषां लक्षणा । न चाज्ञानादीनां प्रत्यनीकता वस्तुस्वरूपमेव, एकेनैव पदेन स्वरूपं प्रतिपन्नमिति पदान्तरप्रयोगवैयर्थ्यात् । तथा सति सामानाधिकरण्यासिद्धिश्च, एकस्मिन् वस्तुनि वर्तमानानां पदानां निमित्तभेदानाश्रयणात् । न चैकस्यैवार्थस्य विशेषणभेदेन विशिष्टताभेदादनेकार्थत्वं पदानां सामानाधिकरण्यविरोधि, एकस्यैव वस्तुनोऽनेकविशेषणविशिष्टताप्रतिपादनपरत्वात्सामानाधिकरण्यस्य । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति हि शाब्दिकाः । यदुक्तम् "एकमेवाद्वितीयम्" इत्यत्राद्वितीयपदं गुणतोऽपि सद्विती(१)यतां न सहते । अतः सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानामद्वितीयवस्तुप्रतिपादनपरत्वमभ्युपगमनीयम् । कारणतयोपलक्षितस्याद्वितीयस्य ब्रह्मणो लक्षणमिदमुच्यते "सत्यं ज्ञानमनन्तं ब्रह्म" इति । अतो लक्षणविहित ब्रह्म निर्गुणमेव, अन्यथा निर्गुणं निरञ्जनमित्यादिश्रुतिविरोधश्चेति, तदनुपपन्नं, जगदुपादानस्य ब्रह्मणः स्वव्यतिरिक्ताधिष्ठात्रन्तरनिवारणेन विचित्रशक्तियोगप्रतिपादनपरत्वादद्वितीयपदस्य । तथैव विचित्रशक्तियोगमेवावगमयति "तदैक्षत बहु स्यां प्रजायेय" इति, "तत्तेजोऽसृजत" इत्यादि । अविशेषेणाद्वितीयमित्युक्ते निमित्तान्तरमात्रनिषेधः कथं ज्ञायत इति चेत् । सिसृक्षोर्ब्रह्मण उपादानकारणत्वं "सदेव सोम्येदमग्र आसीत्" "एकमेव" इति प्रतिपादितम् । कार्योत्पत्तिस्वाभाव्येन बुद्धिस्थं निमित्तान्तरमिति तदेवाद्वितीयपदेन निषिध्यत इत्यवगम्यते । सर्वनिषेधे हि स्वाभ्युपगताः सिषाधयिषितनित्यत्वादयश्च निषिद्धाः स्युः । सर्वशाखाप्रत्ययन्यायश्चात्र भवतो विपरीतफलः, सर्वशाखासु कारणान्वयिनां सर्वज्ञत्वादीनां गुणानामत्रोपसंहारहेतुत्वात् । अतः कारणवाक्यस्वभावादपि "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यनेन सविशेषमेव प्रतिपाद्यत इति विज्ञायते । न च निर्गुणवाक्यविरोधः, प्राकृतहेयगुणविषयत्वात् तेषां "निर्गुणं निष्कलं

१ सजातीयतां न सहते इति पुस्तकान्तरपाठः।

ऽनन्तम्" इत्यादीनाम्। ज्ञानमात्रस्वरूपवादिन्योऽपि श्रुतयो ब्रह्मणो ज्ञानस्वरूपतामभिदधति। न तावता निर्विशेषज्ञानमात्रमेव तत्त्वं ज्ञातुरेव ज्ञानस्वरूपत्वात्। ज्ञानस्वरूपस्यैव तस्य ज्ञानाश्रयत्वं मणिद्युमणिप्रदीपादिवत् युक्तमेवेत्युक्तम्। ज्ञातृत्वमेव हि सर्वाः श्रुतयो वदन्ति "यः सर्वज्ञः सर्ववित्" "तदैक्षत" "सेयं देवतैक्षत" "स ऐक्षत लोकान्नु सृजा" इति। "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" "ज्ञाज्ञौ द्वावजावीशनीशौ"।

"तमीश्वराणां परमं महेश्वरं
तं देवतानां परमं च दैवतम्॥
पतिं पतीनां परमं परस्तात्
विदाम देवं भुवनेशमीड्यम्॥
न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते॥
पराऽस्य शक्तिर्विविधैव श्रूयते।
स्वाभाविकी ज्ञानबलक्रिया च॥"

"एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः" "सत्यकामः सत्यसङ्कल्पः" इत्याद्याः श्रुतयो ज्ञातृत्वप्रमुखान् कल्याणगुणान् ज्ञानस्वरूपस्यैव ब्रह्मणः स्वाभाविकान् वदन्ति समस्तहेयगुणविरहिततां च। निर्गुणवाक्यानां सगुणवाक्यानां च विषयमपहतपाप्मेत्याद्यपिपास इत्यन्तेन हेयगुणान्प्रतिषिध्य सत्यकामः सत्यसंकल्प इति ब्रह्मणः कल्याणगुणान् विदधतीयं श्रुतिरेव विविनक्तीति सगुणनिर्गुणवाक्ययोर्विरोधाभावादन्यतरस्य मिथ्याविषयताश्रयणमपि नाशङ्कनीयम्। "भीषाऽस्माद्वातः पवते" इत्यादिना ब्रह्मगुणानारभ्य "ते ये शतम्" इत्यनुक्रमेण क्षेत्रज्ञानन्दातिशयमुक्त्वा

"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"॥

"आनन्दं ब्रह्मणो विद्वान्" इति ब्रह्मणः कल्याणगुणानन्त्यमत्यादरेण वदतीयं श्रुतिः। "सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता" इति ब्रह्मवेदनफलमवगमयद्वाक्यं परस्य विपश्चितो ब्रह्मणो गुणानन्त्यं ब्रवीति। विपश्चिता

ब्रह्मणा सह सर्वान् कामानश्नुते, काम्यन्ते इति कामाः कल्याणगुणाः ब्रह्मणा सह तद्गुणान् सर्वानश्नुत इत्यर्थः । दहरविद्यायां "तस्मिन्यदन्तस्तदन्वेष्टव्यम्" इतिवत् गुणप्राधान्यं वक्तुं सहशब्दः । फलोपासनयोः प्रकारैक्यं "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति श्रुत्यैव सिद्धम् । "यस्यामतं तस्य मतम्" "अविज्ञातं विजानताम्" इति ब्रह्मणो ज्ञानाविषयत्वमुक्तमिति चेत् । "ब्रह्मविदाप्नोति परम्" "ब्रह्म वेद ब्रह्मैव भवति" इति ज्ञानान्मोक्षोपदेशो न स्यात् ।

असन्नेव स भवति असद्ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः

इति ब्रह्मविषयज्ञानाभावसद्भावाभ्यामात्मनाशमात्मसत्तां च वदति । अतो ब्रह्मविषयवेदनमेवापवर्गाय सर्वाः श्रुतयो विदधति । ज्ञानं चोपासनात्मकम् । उपास्यं च ब्रह्म सगुणमित्युक्तम् । "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति ब्रह्मणोऽनन्तस्यापरिमितगुणस्य वाङ्मनसयोरेतावदिति परिच्छेदायोग्यत्वश्रवणेन ब्रह्मैतावदिति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्माविज्ञातममतमित्युक्तम्, अपरिच्छिन्नत्वाद् ब्रह्मणः । अन्यथा "यस्यामतं तस्य मतम्" "विज्ञातमविजानताम्" इति ब्रह्मणो मतत्वविज्ञातत्ववचनं तत्रैव विरुध्यते । यत्तु "न दृष्टेर्द्रष्टारं न मतेर्मन्तारम्" इति श्रुतिः दृष्टिमतिव्यतिरिक्तं द्रष्टारं मन्तारं च प्रतिषेधतीति, तद् आगन्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञानस्वरूपतां कुतर्कसिद्धां मत्वा 'न तथात्मानं पश्येः न मन्वीथाः, अपि तु द्रष्टारं मन्तारमप्यात्मानं दृष्टिमतिरूपमेव पश्येः" इत्यभिदधातीति परिहृतम् । अथवा दृष्टेर्द्रष्टारं, मतेर्मन्तारं जीवात्मानं प्रतिषिध्य सर्वभूतान्तरात्मानं परमात्मानमेवोपास्स्वेति वाक्यार्थः । अन्यथा "विज्ञातारमरे केन विजानीयात्" इत्यादिज्ञातृत्वश्रुतिविरोधश्च । "आनन्दो ब्रह्म" इत्यानन्दमात्रमेव ब्रह्मस्वरूपं प्रतीयत इति यदुक्तम् तत् ज्ञानाश्रयस्य ब्रह्मणो ज्ञानं स्वरूपमिति वदतीति परिहृतम् । ज्ञानमेव ह्यनुकूल-

आनन्द इत्युच्यते, "विज्ञानमानन्दं ब्रह्म" इत्यानन्दरूपमेव विज्ञानं ब्रह्मेत्यर्थः । अत एव ब्रह्मात्मैकत्वता । अत एव ज्ञानस्वरूपस्यैव ज्ञातृत्वमपि श्रुतिप्रत्यक्षविगलितमित्युक्तम् । तद्वदेव "स एको ब्रह्मण आनन्दः" "आनन्दं ब्रह्मणो विद्वान्" इत्यादिव्यतिरेकनिर्देशाच्च नानन्दमात्रं ब्रह्म, अपि त्वानन्दि । ज्ञातृत्वमेव ह्यानन्दित्वम् । यदिदमुक्तम्, "यत्र हि द्वैतमिव भवति" "नेह नानाऽस्ति किंचन" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति भेदनिषेधो बहुधा दृश्यत इति, तत् कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात्तत्प्रत्यनीकनानात्वं प्रतिषिध्यते, न पुनः "बहु स्यां प्रजायेय" इति बहुभवनसङ्कल्पपूर्वकं ब्रह्मणो नानात्वं श्रुतिसिद्धं प्रतिषिध्यत इति परिहृतम् । नानात्वनिषेधादियमपरमार्थविषयेति चेत्, न, प्रत्यक्षादिसकलप्रमाणानवगतनानात्वं दुरारोहं ब्रह्मणः प्रतिपाद्य तदेव बाध्यत इत्युपहास्यमिदम् । "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति" इति ब्रह्मणि नानात्वं पश्यतो भयप्राप्तिरिति यदुक्तं, तदसत्, "सर्वं खल्विदं ब्रह्म" "तज्जलानिति शान्त उपासीत" इति नानात्वानुसन्धानस्य शान्तिहेतुत्वोपदेशात् । तथा हि सर्वस्य जगतः तदुत्पत्तिस्थितिलयकर्मतया तदात्मकत्वानुसन्धानेनात्र शान्तिर्विधीयते । अतो यथाऽवस्थितदेवतिर्यङ्मनुष्यस्थावरादिभेदभिन्नं जगत् ब्रह्मात्मकमित्यनुसन्धानस्य शान्तिहेतुतयाऽभयप्राप्तिहेतुत्वेन न भयहेतुत्वप्रसङ्गः । एवं तर्हि "अथ तस्य भयं भवति" इति किमुच्यते-इदमुच्यते "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्ते निलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयङ्गतो भवति" इत्यभयप्राप्तिहेतुत्वेन ब्रह्मणि या प्रतिष्ठाऽभिहिता तस्या विच्छेदे भयं भवतीति । यथोक्तं महर्षिभिः ।

"यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते ।
सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया" ॥

इत्यादि । ब्रह्मणि प्रतिष्ठाया अन्तरमवकाशो विच्छेद एव ॥

यदुक्तम्, "न स्थानतोऽपि" इति सर्वविशेषरहितं ब्रह्मेति वक्ष्यतीति, तन्न । सविशेषं ब्रह्मेत्येव हि तत्र वक्ष्यति । "मायामात्रं तु" इति च स्वाप्नानामर्थानां जागरितावस्थानुभूतपदार्थवैधर्म्येण मायामात्रत्वमुच्यत इति जागरितावस्थाऽनुभूतानामिव पारमार्थिकत्वमेव वक्ष्यति ॥

स्मृतिपुराणयोरपि निर्विशेषज्ञानमात्रमेव परमार्थोऽन्यदपारमार्थिकमिति प्रतीयत इति यदभिहितं, तदसत्,

"यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत्किंचिदस्ति धनञ्जय ॥
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" ॥

"स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः ।
अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥
समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धृतभूतसर्गः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥
तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परा(१)परेशे ॥
स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः ।
सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥
संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् ।
संदृश्यते वाऽप्यधिगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥
शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते ।

(१) परापरेशे इति पाठान्तरम् ।

मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥
संभर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः ।
नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ॥
ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥

वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि ।
स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ॥
ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥
एवमेव महाशब्दो मैत्रेय भगवानिति ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥
तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण त्वन्यत्र ह्युपचारतः ॥

समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥
समस्तशक्तिरूपाणि तत् करोति जनेश्वर ।
देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ॥
जगतामुपकाराय न सा कर्मनिमित्तजा ।
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ॥

एवंप्रकारममलं नित्यं व्यापकमक्षयम् ।
समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ॥
परः पराणां परमः परमात्मात्मसंस्थितः ।
रूपवर्णादिनिर्देशविशेषणविवर्जितः ।
अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदाऽस्तीति केवलम् ॥
सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥
तद् ब्रह्म परमं नित्यमजमक्षरमव्ययम् ।
एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥
तदेव सर्वमेवैतद् व्यक्ताव्यक्तस्वरूपवत् ।

तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥
प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥
परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥
द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च ।
क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते ॥
अक्षरं तत् परं ब्रह्म क्षरः सर्वमिदं जगत् ।
एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ॥
परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ।
विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा ॥
अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ॥
संसारतापानखिलानवाप्नोत्यतिसंततान् ।
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ॥
सर्वभूतेषु भूपाल तारतम्येन वर्तते ।
प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया ॥
विष्णुशक्त्या महाबुद्धे वृतौ संश्रयधर्मिणौ ।
तयोः सैव पृथग्भावकारणं संश्रयस्य च ॥
यथा सक्तो जले वातो बिभर्ति कणिकाशतम् ।
शक्तिः साऽपि तथा विष्णोः प्रधानपुरुषात्मकम् ॥
तदेतदक्षयं नित्यं जगत् मुनिवराखिलम् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥

इत्यादिना परं ब्रह्म स्वभावत एव निरस्तनिखिलदोषगन्धं समस्तकल्याणगुणात्मकं जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलीलं प्रतिपाद्य कृत्स्नस्य चिदचिद्वस्तुनः सर्वावस्थाऽवस्थितस्य पारमार्थिकस्यैव परस्य ब्रह्मणः शरीरतया रूपत्वं शरीररूपतन्वंशशक्तिविभूत्यादिशब्दैस्तच्छब्दाना

ताधिकरणेन चाभिधाय तद्विभूतिभूतिभूतस्य चिद्वस्तुनः स्वरूपेणावस्थितिमचिन्मिश्रतया क्षेत्रज्ञरूपेण स्थितिं चोक्त्वा क्षेत्रज्ञावस्थायां पुण्यपापात्मककर्मरूपाविद्यावेष्टितत्वेन स्वाभाविकज्ञानरूपत्वानुसंधानमचिद्रूपाणांकारतयाऽनुसन्धानं च प्रतिपादितमिति परं ब्रह्म सविशेषम् । तद्विभूतिभूतं च जगदपि पारमार्थिकमेवेति ज्ञायते । "प्रत्यस्तमितभेदम्" इत्यत्र देवमनुष्यादिप्रकृतिपरिणामविशेषसंसृष्टस्याप्यात्मनः स्वरूपं तद्गतभेदरहितत्वेन तद्भेदवाचिदेवादिशब्दागोचरं ज्ञानसत्तैकलक्षणं स्वसंवेद्यं योगयुङ्मनसो न गोचर इत्युच्यत इत्यनेन न प्रपञ्चापलापः । कथमिदमवगम्यत इति । तदुच्यते, अस्मिन् प्रकरणे संसारैकभेषजतया योगमभिधाय योगावयवान् प्रत्याहारपर्यन्तांश्चाभिधाय धारणासिद्ध्यर्थं शुभाश्रयं वक्तुं परस्य ब्रह्मणो विष्णोः शक्तिशब्दाभिधेयं रूपद्वयं मूर्तामूर्तविभागेन प्रतिपाद्य तृतीयशक्तिरूपकर्माख्याविद्यावेष्टितमचिद्विशिष्टं क्षेत्रज्ञं मूर्ताख्यविभागं भावनात्रयान्वयादशुभमित्युक्त्वा द्वितीयस्य कर्माख्याविद्याविरहिणोऽचिद्वियुक्तस्य ज्ञानैकाकारस्यामूर्ताख्यविभागस्य निष्पन्नयोगिध्येयतया योगयुङ्मनसोऽनालम्बनतया स्वतःशुद्धिविरहाच्च शुभाश्रयत्वं प्रतिषिध्य परशक्तिरूपमिदममूर्तमपरशक्तिरूपं क्षेत्रज्ञाख्यं मूर्तं च परशक्तिरूपस्यात्मनः क्षेत्रज्ञतापत्तिहेतुभूततृतीयशक्त्याख्यकर्मरूपाविद्या चेत्येतच्छक्तित्रयाश्रयो भगवदसाधारणम् "आदित्यवर्णम्" इत्यादिवेदान्तसिद्धं मूर्तस्वरूपं शुभाश्रय इत्युक्तम् । अत्र परिशुद्धात्मस्वरूपस्य शुभाश्रयतानर्हतां वक्तुं प्रत्यस्तमितभेदं यदित्याद्युच्यते । तथा हि ।

"न तद्योगयुजा शक्यं नृप चिन्तयितुं यतः ।
द्वितीयं विष्णुसंज्ञस्य योगिध्येयं परं पदम् ॥
समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्" ॥

इति च वदति । तथा चतुर्मुख(१)सनकादीनां जगदन्तर्वर्तिना-

(१) चतुर्मुखसनन्दनादीनामिति पुस्तकान्तरपाठः ।

मवीद्यावेष्टितत्वेन शुभाश्रयत्वानर्हतामुक्त्वा बद्धानामेव पश्चाद्योगेनोद्भूतबोधानां स्वस्वरूपापन्नानां च स्वतःशुद्धिविरहाद् भगवता शौनकेन शुभाश्रयता निषिद्धा

"आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥
यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः ।
अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः ॥
पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः ।
नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः ॥
तस्मात्तदमलं ब्रह्म निसर्गादेव बोधवत्" ॥ इत्यादिना ।

परस्य ब्रह्मणो विष्णोः स्वरूपमसाधारणमेव शुभाश्रयमित्युक्तम् । अतोऽत्र न भेदापलापः प्रतीयते । "ज्ञानस्वरूपम्" इत्यत्रापि ज्ञानव्यतिरिक्तार्थजातस्य कृत्स्नस्य न मिथ्यात्वं प्रतिपाद्यते, ज्ञानस्वरूपस्यात्मनो देवमनुष्याद्यर्थाकारेणावभासो भ्रान्तिरित्येतावन्मात्रवचनात् । न हि शुक्तिकाया रजततयाऽवभासो भ्रान्तिरित्युक्ते जगति कृत्स्नं रजतजातं मिथ्या भवति । जगद्ब्रह्मणोः सामानाधिकरण्येनैक्यप्रतीतेर्ब्रह्मणो ज्ञानस्वरूपस्यार्थाकारता भ्रान्तिरित्युक्ते अर्थजातस्य कृत्स्नस्य मिथ्यात्वमुक्तं स्यादिति चेत् । तदसत्, अस्मिन् शास्त्रे परस्य ब्रह्मणो विष्णोर्निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याणगुणात्मकस्य महाविभूतेः प्रतिपन्नतया तस्य भ्रान्तिदर्शनासम्भवात् । सामानाधिकरण्येनैक्यप्रतिपादनं च बाधासहमविरुद्धं चेत्यनन्तरमेवोपपादयिष्यते । अतोऽयमपि श्लोको नार्थस्वरूपस्य बाधकः । तथा हि "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्म" *इति जगज्जन्मादिकारणं ब्रह्मेत्यव*गते सति

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति" ॥

इति शास्त्रेणास्यार्थस्य इतिहासपुराणाभ्यामुपबृंहणं कार्यमिति ज्ञायते । उपबृंहणं नाम विदितसकलवेदतदर्थानां स्व-

योगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वावगतवेदवाक्यार्थस्थिरीकरणात् । सकलशाखानुगतस्य वाक्यार्थस्याल्पभागश्रवणात् दुरवगमत्वेन तेन विना निश्चयायोगात् उपबृंहणं हि कार्यमेव । अत्र पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवतो भगवतः पराशरात् स्वावगतवेदार्थोपबृंहणमिच्छन् मैत्रेयः परिपप्रच्छ,

"सोऽहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत् ।
बभूव भूयश्च यथा महाभाग भविष्यति ॥
यन्मयं च जगद्ब्रह्मन् यतश्चैतच्चराचरम् ।
लीनमासीद्यथा यत्र लयमेष्यति यत्र च" ॥ इत्यादिना,

अत्र ब्रह्मस्वरूपविशेषतद्विभूतिभेदप्रकारतदाराधनस्वरूपफलविशेषाश्च पृष्टाः । ब्रह्मस्वरूपविशेषप्रश्नेषु "यतश्चैतच्चराचरम्" इति निमित्तोपादानयोः पृष्टत्वात् "यन्मयम्" इत्यनेन सृष्टिस्थितिलयकर्मभूतं जगत् किमात्मकमिति पृष्टे, तस्योत्तरं "जगच्च सः" इति । इदं च तादात्म्यमन्तर्यामिरूपेणात्मतया व्याप्तिकृतं न तु व्याप्यव्यापकयोर्वस्त्वैक्यकृतं "यन्मयम्" इतिप्रश्नस्योत्तरत्वात् "जगच्च सः" इति सामानाधिकरण्यस्य । यन्मयमिति मयट् न विकारार्थः, पृथक्प्रश्नवैयर्थ्यात् । नापि प्राणमयादिवत् स्वार्थिकः, "जगच्च सः" इत्युत्तरानुपपत्तेः । तदा हि विष्णुरेवेत्युत्तरमभविष्यत् । अतः प्राचुर्यार्थ एव "तत्प्रकृतवचने मयट्" इति मयट्, कृत्स्नं च जगत् तच्छरीरतया तत्प्रचुरमेव । तस्मात् "यन्मयम्" इत्यस्य प्रतिवचनं "जगच्च सः" इति सामानाधिकरण्यं जगद्ब्रह्मणोः शरीरात्मभावनिबन्धनमिति निश्चीयते । अन्यथा निर्विशेषवस्तुप्रतिपादनपरे शास्त्रेऽभ्युपगम्यमाने सर्वाण्येतानि प्रश्नप्रतिवचनानि न सङ्गच्छन्ते, तद्विवरणरूपं कृत्स्नं च शास्त्रं न सङ्गच्छते । तथा हि सति प्रपञ्चभ्रमस्य किमधिष्ठानमित्येवंरूपस्यैकस्य प्रश्नस्य निर्विशेषज्ञानमात्रमित्येवंरूपमेकमेवोत्तरं स्यात् । "जगच्च सः" इति जगद्ब्रह्मणोरैक्यरूपपरे च सामानाधिकरण्ये सत्यसङ्कल्पत्वादिगुणैकसागरता

निखिलहेयप्रत्यनीकतां च बोधयेत्, सर्वाशुभास्पदं च ब्रह्म भवेत् । आत्मशरीरभाव एवेदं सामानाधिकरण्यं मुख्यवृत्तमिति स्थाप्यते । अतो

"विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम् ।
स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः" ॥

इति संक्षेपेणोक्तमर्थं "परः पराणाम्" इत्यारभ्य विस्तरेण वक्तुं परब्रह्मभूतं भगवन्तं विष्णुं स्वेनैव रूपेणावस्थितम् "अविकाराय" इति श्लोकेन प्रथमं प्रणम्य, तमेव हिरण्यगर्भहरिशङ्कररूपत्रिमूर्तिप्रधानकालक्षेत्रज्ञसमष्टिव्यष्टिरूपेणावस्थितं च नमस्करोति । तत्र "ज्ञानस्वरूपम्" इत्ययं श्लोकः क्षेत्रज्ञव्यष्ट्यात्मनाऽवस्थितस्य परमात्मनः स्वभावमाह । तस्मान्नात्र निर्विशेषवस्तुप्रतीतिः । यदि निर्विशेषज्ञानरूपब्रह्माधिष्ठानभ्रमप्रतिपादनपरं शास्त्रं, तर्हि

"निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ।
कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते"
इति चोद्यम्,
"शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता" ।

इति परिहारश्च न घटते । तथा हि यदि ब्रह्मणो निर्गुणस्य कथं सर्गादिकर्तृत्वं ब्रह्मणो न पारमार्थिकः सर्गोऽपि तु भ्रान्तिकल्पित इति चोद्यपरिहारौ स्याताम् । सत्त्वादिकार्यं सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्येषु दृष्टमिति सत्त्वादिगुणरहितस्य परिपूर्णस्याकर्मवश्यस्य कर्मसंबन्धानर्हस्य कथं सर्गादिः कर्तृत्वमभ्युपगम्यत इति चोद्यं, दृष्टसकलवि(१)सजातीयस्य ब्रह्मणो यथोदितस्वभावस्यैव जलादिविसजातीयस्याग्न्यादेरौष्ण्यादिशक्तियोगवत् सर्वशक्तियोगो न विरुध्यत इति परिहारः । "परमार्थस्त्वमेवैक" इत्याद्यपि न कृत्स्नस्यापारमार्थ्यं वदति, अपि तु कृत्स्नस्य तदात्मकतया तद्व्यतिरेकेणावस्थितस्यापारमार्थ्यम् । तदेवोपपादयति

१ विजातीयेति पाठान्तरम् ।

"तवैष महिमा येन व्याप्तमेतच्चराचरम्" ॥ इति,

येन त्वयेदं चराचरं व्याप्तम्, अतस्त्वदात्मकमेवेदं सर्वमिति त्वदन्यः कोऽपि नास्तीम्, अतः सर्वात्मतया त्वमेवैकः परमार्थः । अत इदमुच्यते तवैव महिमा यां सर्वव्याप्तिरिति अन्यथा तवैषा भ्रान्तिरिति वक्तव्यं, "जगतः पते त्वम्"इत्यादीनां लक्षणा च स्यात्, लीलया महीमुद्धरतो भगवतो महावराहस्य स्तुतिप्रकरणविरोधश्च । यतः कृत्स्नं जगत् ज्ञानात्मना त्वयाऽऽत्मतया व्याप्तत्वेन तव मू(१)र्तं, तस्मात् । त्वदात्मकत्वानुभवसाधनयोगविरहिण एतत्केवलदेवमनुष्यादिरूपमिति भ्रान्तिज्ञानेन पश्यन्तीत्याह—"यदेतद्दृश्यते"इति । न केवलं वस्तुतस्त्वदात्मकं जगत् देवमनुष्याद्यात्मकमिति दर्शनमेव भ्रमः, ज्ञानाकाराणामात्मनां देवमनुष्याद्याकारत्वदर्शनमपि भ्रम इत्याह—"ज्ञानस्वरूपमखिलम्"इति । ये पुनर्बुद्धिमन्तो ज्ञानस्वरूपात्मविदः सर्वस्य भगवदात्मकत्वानुभवसाधनयोगयोग्यपरिशुद्धमनसश्च ते देवमनुष्यादिप्रकृतिपरिणामविशेषशरीररूपमिदमखिलं जगत् शरीरातिरिक्तज्ञानस्वरूपात्मकं त्वच्छरीरं पश्यन्तीत्याह—"ये तु ज्ञानविद"इति । अन्यथा श्लोकानां पौनरुक्त्यं, पदानां लक्षणा, अर्थविरोधः, प्रकरणविरोधः, शास्त्रतात्पर्यविरोधश्च । "तस्यात्मपरदेहेषु सतोऽप्येकमयम्"इत्यत्र सर्वेष्वात्मसु ज्ञानैकाकारतया समानेषु सत्सु देवमनुष्यादिप्रकृतिपरिणामविशेषरूपपिण्डसंसर्गकृतमात्मसु देवाद्याकारेण द्वैतदर्शनमतथ्यमित्युच्यते, पिण्डगतमात्मगतमपि द्वैतं न प्रतिषिध्यते, देवमनुष्यादिविविधविचित्रपिण्डेषु वर्त्तमानं सर्वमात्मवस्तु सममित्यर्थः, यथोक्तं भगवता

"शुनि चैव श्वपाके च पण्डिताः समदर्शिनः"। इति

"निर्दोषं हि समं ब्रह्म"इत्यादिषु, "तस्यात्मपरदेहेषु सतोऽपि"इति देहातिरिक्ते वस्तुनि स्वपरविभागस्योक्तत्वात् "यद्यन्योऽस्ति परः कोऽपि"इत्यत्रापि नात्मैक्यं प्रतीयते, यदि मत्तः परः कोऽप्यन्य इत्येकस्मिन्नर्थे परशब्दान्यशब्दयोः प्रयोगायोगात् । तत्र परशब्दः स्वव्यतिरिक्तात्मवचनः, अन्य-

(१) मूर्त्तिरिति पाठान्तरम् ।

शब्दस्तस्यापि ज्ञानैकाकारत्वादन्याकारत्वप्रतिषेधार्थः । एतदुक्तं भवति, यदि मद्व्यतिरिक्तः कोऽप्यात्मा मदाकारभूतज्ञानैकाकारादन्याकारोऽस्ति तदाऽहमेवमाकारोऽयमन्यादृशाकार इति शक्यते व्यपदेष्टुम् । न चैवमस्ति, सर्वेषां ज्ञानैकाकारत्वेन समानत्वादेवेति । "वेणुरन्ध्रविभेदेन" इत्यत्राप्याकारवैषम्यमात्मनां न स्वरूपकृतम्, अपि तु देवादिविग्रहप्रवेशकृतमित्युपदिश्यते, नात्मैक्यम् । दृष्टान्ते चानेकरन्ध्रवर्तिनां वाय्वंशानां न स्वरूपैक्यम्, अपि त्वाकारसाम्यमेव; तेषां वायुत्वेनैकाकाराणां रन्ध्रभेदनिष्क्रमणकृतो हि षड्जादिसंज्ञाभेदः । एवमात्मनां देवादिसंज्ञाभेदः । तैजसाप्यपार्थिवद्रव्याश्रयभूतानां पदार्थानां तत्तद्द्रव्यत्वेनैक्यमेव न स्वरूपैक्यं, तथा वायवीयानामंशानामपि स्वरूपभेदोऽवर्जनीयः । "सोऽहं न च त्वम्" इति सर्वात्मना पूर्वोक्तं ज्ञानाकारं तच्छब्देन परामृश्य तत्सामानाधिकरण्येनाहंत्वमित्यादीनामपरेषां ज्ञानमेवाकार इत्युपसंहरन् देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेत्याह । अन्यथा देहाद्यतिरिक्तोपदेश्यस्वरूपोऽहं त्वं सर्वमेतदात्मस्वरूपमिति भेदनिर्देशो न घटते । अहंत्वमादिशब्दानामुपलक्षणेन सर्वमेतदात्मस्वरूपमित्यनेन सामानाधिकरण्यादुपलक्षणत्वमपि न सङ्गच्छते । सोऽपि यथोपदेशमकरोदित्याह—"तत्याज भेदं परमार्थदृष्टिः" इति । कुतश्चैवं निर्णय इति चेत् । देहात्मविवेकविषयत्वादुपदेशस्य, तच्च

"पिण्डः पृथग् यतः पुंसः शिरःपाण्यादिलक्षणः"।

इति प्रक्रमात् । "विभेदजनके ज्ञाने" इति च नात्मस्वरूपैक्यपरं, नापि जीवपरयोः आत्मस्वरूपैक्यमुक्तरीत्या निषिद्धम् । जीवपरयोरपि स्वरूपैक्यं देहात्मनोरिव न संभवति, तथा च श्रुतिः—"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति"

"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये,
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः"

"अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा" इत्याद्याः अस्मिन्नपि शास्त्रे च ।

"स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः ।
अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥
समस्तकल्याणगुणात्मकोऽसौ परः पराणां सकला न यत्र ।
क्लेशादयः सन्ति परावरेशे ।

अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा" ॥

इति भेदव्यपदेशात्, "उभयेऽपि हि भेदेनैनमधीयते" "भेदव्यपदेशाच्चान्यः" "अधिकं तु भेदनिर्देशात्" इत्यादिषु सूत्रेषु च "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति" प्राज्ञेनात्मना सम्परिष्वक्तः" "प्राज्ञेनात्मनाऽन्वारूढः" इत्यादिभिरुभयोरन्योन्यप्रत्यनीकाकारेण स्वरूपनिर्णयात् । नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसम्भवः, अविद्याश्रयत्वयोग्यस्य तदनर्हत्वासम्भवात् । यथोक्तम्—

परमात्मात्मनोर्योगः परमार्थ इतीष्यते ।
मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः" ॥ इति ।
मुक्तस्य तु तद्धर्मतापत्तिरेवेति भगवद्गीतायामुक्तम्,
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ इति ।

इहापि

आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने ।
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥ इति ।

आत्मभावमात्मनः स्वभावम् । न ह्याकर्षकस्वरूपापत्तिराकृष्यमाणस्य । वक्ष्यति च "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" "भोगमात्रसाम्यलिङ्गाच्च" "मुक्तोपसृप्यव्यपदेशाच्च" इति । वृत्ति(१)रपि "जगद्व्यापारवर्जं समानो ज्योतिषा" इति । द्रवि(२)डभाष्यकारश्च "दैवतसायुज्यादशरीर

---

१ बोधायनमहर्षिप्रणीता ।

२ द्रविडाचार्याः प्राचीना विशिष्टाद्वैतमतानुयायिनो येषां मतं शाङ्करभाष्यव्याख्यासु बहुशो वृत्तिकृतामिव वर्णयित्वा पराक्रियते ।

स्यापि "देवतावत्सर्वार्थसिद्धिः स्यात्" इत्याह । श्रुतयश्च "य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति" "ब्रह्मविदाप्नोति परम्" "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति, "एतमानन्दमयमात्मानमुपसंक्रम्य, इमांल्लोकान् कामान्नीकामरूप्यनुसञ्चरन्" "स तत्र पर्येति" "रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय, तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" "तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इत्याद्याः । परविद्यासु सर्वासु सगुणमेव ब्रह्मोपास्यं, फलं चैकरूपमेव । अतो विद्याविकल्प इति सूत्रकारेणैव "आनन्दादयः प्रधानस्य" "विकल्पोऽविशिष्टफलत्वात्" इत्यादिनोक्तम् । वाक्यका(१)रेण च सगुणस्यैवोपास्यत्वं विद्याविकल्पश्चोक्तः "युक्तं तद्गुणकोपासनात्" इति । भाष्यकृता व्याख्यातं च "यद्यपि सचित्तः" इत्यादिना "ब्रह्म वेद ब्रह्मैव भवति" इत्यत्रापि "नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं" "निरञ्जनः परमं साम्यमुपैति" "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादिभिरैकार्थ्यात् प्राकृतनामरूपाभ्यां विनिर्मुक्तस्य निरस्ततत्कृतभेदस्य,ज्ञानैकाकारतया ब्रह्मप्रकारतोच्यते । प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव, यथा सेयं गौरिति । अत्रापि

विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव ।
प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ॥

परब्रह्मध्यानाद्यात्मा परब्रह्मवत् प्रक्षीणाशेषभावनः कर्मभावनाब्रह्मभावनोभयभावनेतिभावनात्रयरहितः प्रापणीय इत्यभिधाय

क्षेत्रज्ञः करणी ज्ञानं करणं तस्य वै द्विज ।
निष्पाद्य मुक्तिकार्यं वै कृतकृत्यं निवर्तयेत् ॥

इति करणस्य परब्रह्मध्यानरूपस्य प्रक्षीणाशेषभावनात्मस्वरूपप्राप्त्या कृतकृत्यत्वेन निवृत्तिवचनात् पाक्षिकमिदमनुष्ठेयमित्युक्तः

१ वाक्यकारश्च द्रविडाचार्यादपि प्राचीनो विशिष्टाद्वैतवादी टङ्कनाम्ना प्रसिद्धः ।

"तद्भावभावमापन्नस्तदाऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्" ॥

इति मुक्तस्य स्वरूपमाह । तद्भावो ब्रह्मणो भावः स्वभावः, न तु स्वरूपैक्यं, "तद्भावभावमापन्न" इति द्वितीयभावशब्दानन्वयात्पूर्वोत्तरार्थविरोधाच्च । यत् ब्रह्मणः प्रक्षीणाशेषभावनत्वं तदापत्तिः=तद्भावभावापत्तिः, यदैवमापन्नः तदाऽयं परमात्मनाऽभेदी भवति=भेदरहितो भवति । ज्ञानैकाकारतया परमात्मनैकप्रकारस्यास्य तस्माद्भेदो देवादिरूपः, तदन्वयोऽस्य कर्मरूपाज्ञानमूलः, न स्वरूपकृतः । स तु देवादिभेदः परब्रह्मध्यानेन मूलभूताज्ञानरूपे कर्मणि विनष्टे हेत्वभावान्निवर्तते इत्यभेदी भवति । यथोक्तम्—

"एकस्वरूपभेदस्तु बाह्यकर्मप्रवृत्तिजः ।
देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः" ॥ इति ।

एतदेव विवृणोति—

"विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति" ॥ इति ।

विविधो भेदो=विभेदः देवतिर्यङ्मनुष्यस्थावरात्मकः । यथोक्तं शौनकेनापि—

"चतुर्विधो विभेदोऽयं मिथ्याज्ञाननिबन्धनः" इति ।

आत्मनि विज्ञानस्वरूपे देवादिरूपविविधभेदहेतुभूतकर्माख्याज्ञाने परब्रह्मध्यानेनात्यन्तिकं नाशमुपगते सति हेत्वभावादसन्तं परस्माद्ब्रह्मण आत्मनो देवादिरूपभेदं कः करिष्यतीत्यर्थः । "अविद्या कर्मसंज्ञाऽन्या" इत्यत्रैवोक्तम् । "क्षेत्रज्ञं चापि मां विद्धि" इत्यादिनाऽन्तर्यामिरूपेण सर्वस्यात्मतयैक्याभिधानम् । अन्यथा

"क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।
उत्तमः पुरुषस्त्वन्य" इत्यादिभिर्विरोधः । अन्तर्यामिरूपेण सर्वेषामात्मत्वं तत्रैव भगवताऽभिहितम् ।

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
"सर्वस्य चाहं हृदि सन्निविष्टः" इति च ॥
"अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।

इति च। तदेवोच्यते—भूतशब्दो ब्रह्मपर्यन्तदेहवचनः। यतः सर्वेषामयमात्मा तत एव सर्वेषां तच्छरीरतया पृथगवस्थानं प्रतिषिध्यते "न तदस्ति विना यत्स्यात्" इति भगवद्विभूत्युपसंहाररूपायमिति तथैवाभ्युपगन्तव्यम्। तत्र इदमुच्यते—

"यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्॥

विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्"॥ इति। अतः शास्त्रेषु न निर्विशेषवस्तुप्रतिपादनमस्ति, नाप्यर्थजातस्य भ्रान्तत्वप्रतिपादनं, नापि चिदचिदीश्वराणां स्वरूपभेदनिषेधः।

यदप्युच्यते—निर्विशेषे स्वयंप्रकाशे वस्तुनि दोषपरिकल्पितमीशेशितृत्वाद्यनन्तविकल्पं सर्वं जगत्, दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या, सा चावश्यमभ्युपगमनीया। "अनृतेन हि प्रत्यूढाः" इत्यादिभिः श्रुतिभिः ब्रह्मणः तत्त्वमस्यादिवाक्यसामानाधिकरण्यावगतजीवैक्यानुपपत्त्या च। सा तु न सती भ्रान्तिबाधयोरयोगात्, नाप्यसती ख्यातिबाधयोश्चायोगात्, अतः कोटिद्वयविनिर्मुक्तेयमविद्येति तत्त्वविद इति। तदयुक्तं, सा हि किमाश्रित्य भ्रमं जनयतीति वक्तव्यम्। न तावज्जीवमाश्रित्य, अविद्यापरिकल्पितत्वाज्जीवभावस्य। नापि ब्रह्माश्रित्य, तस्य स्वयंप्रकाशज्ञानरूपत्वेनाविद्याविरोधित्वात्। सा हि ज्ञानबाध्याभिमता।

"ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम्।
अज्ञानं चेत् तिरस्कुर्यात्कः प्रभुस्तन्निवर्तने॥
ज्ञानं ब्रह्मेति चेद् ज्ञानमज्ञानस्य निवर्तकम्।
ब्रह्मवत् तत्प्रकाशत्वात्तदपि ह्यनिवर्तकम्॥
ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत्स्यात्प्रमेयता।
ब्रह्मणोऽनुभूतित्वं त्वदुक्त्यैव प्रसज्यते"॥

ज्ञानस्वरूपं ब्रह्मेति ज्ञानं तस्या अविद्याया बाधकं न स्वरूपभूतं ज्ञानमिति चेत्, न, उभयोरपि ब्रह्मस्वरूपप्रकाशत्वे सत्यन्यतरस्याविद्याविरोधित्वमन्यतरस्य नेति विशेषानवगमात्।

एतदुक्तं भवति, ज्ञानस्वरूपं ब्रह्मेत्यनेन ज्ञानेन ब्रह्मणि यः स्वभावोऽवगम्यते, स ब्रह्मणः स्वयंप्रकाशत्वेन स्वयमेव प्रकाशत इत्यविद्याविरोधित्वे न कश्चिद्विशेषः स्वरूपतद्विषयज्ञानयोरिति । किंचानुभवरूपस्य ब्रह्मणोऽनुभवान्तरानुभाव्यत्वेन भवतो न तद्विषयज्ञानमस्ति । अतो ज्ञानमज्ञानविरोधि चेत्, स्वयमेव विरोधि भवतीति नास्या ब्रह्माश्रयत्वसंभवः । शुक्त्यादयस्तु स्वयाथात्म्यप्रकाशे स्वयमसमर्थाः स्वाज्ञानाविरोधिनस्तन्निवर्तने च ज्ञानान्तरमपेक्षन्ते; ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्यमिति स्वाज्ञानविरोध्येव तत एव निवर्तकान्तरं न नापेक्षते । अथोच्येत ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानमज्ञानविरोधीति । न, इदं ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानं किं ब्रह्मयाथात्म्याज्ञानविरोधि, उत प्रपञ्चसत्यत्वरूपाज्ञानविरोधीति विवेचनीयम् । न तावत् ब्रह्मयाथात्म्याज्ञानविरोधि, अतद्विषयत्वात् । ज्ञानाज्ञानयोरेकविषयत्वेन हि विरोधः, प्रपञ्चमिथ्यात्वज्ञानं तत्सत्यत्वरूपाज्ञानेन विरुध्यते, तेन प्रपञ्चसत्यत्वरूपाज्ञानमेव बाधितमिति ब्रह्मस्वरूपाज्ञानं तिष्ठत्येव । ब्रह्मस्वरूपाज्ञानं नाम तस्य सद्वितीयत्वमेव । तत्तु तद्व्यतिरिक्तस्य मिथ्यात्वज्ञानेन निवृत्तम् । स्वरूपं तु स्वानुभवसिद्धमिति चेत् । न, ब्रह्मणोऽद्वितीयत्वं स्वरूपं स्वानुभवसिद्धमिति तद्विरोधि सद्वितीयत्वरूपाज्ञानं तद्बाधश्च न स्याताम् । अद्वितीयत्वं धर्म इति चेत् । न, अनुभवरूपस्य ब्रह्मणोऽनुभाव्यधर्मविरहस्य भवतैवोपपादितत्वात् । अतो ज्ञानस्वरूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वम् । किंचाविद्यया प्रकाशैकस्वरूपं ब्रह्म तिरोहितमिति वदता स्वरूपनाश एवोक्तः स्यात् । प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धो वा विद्यमानस्य विनाशो वा, प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं प्रकाशनाश एव । अपि च निर्विषया निराश्रया च स्वप्रकाशेयमनुभूतिः स्वाश्रयदोषवशादनन्ताश्रयमनन्तविषयमात्मानमनुभवतीत्यत्र किमयं स्वाश्रयदोषः परमार्थभूतः, उतापरमार्थभूत इति विवेचनीयम् । न तावत्परमार्थः, अनभ्युपगमात् । नाप्यपरमार्थः, तथा हि सति द्रष्टृत्वेन वा दृश्यत्वेन वा दृक्त्वेन वाऽभ्युपगमनीयः ।

न तावद् दृष्टिः, दृष्टिस्वरूपभेदानभ्युपगमात्। समाधिष्ठानभूतायास्तु साक्षाद्दृशेर्मोक्षमिकपक्षप्रसक्तेरपारमार्थ्यानभ्युपगमाच्च दृष्टृदृश्ययोस्तदवच्छिन्नाया दृशेश्च काल्पनिकत्वेन मूलदोषान्तरापेक्षयाऽनवस्था स्यात्। अथैतत्परिजिहीर्षया परमार्थसत्यनुभूतिरेव ब्रह्मस्वरूपा दोष इति चेत्। ब्रह्मैव चेद्दोषः, प्रपञ्चदर्शनस्यैव तन्मूलं स्यात्, किं प्रपञ्चतुल्याविद्यान्तरकल्पनेन। ब्रह्मणो दोषत्वे सति तस्य नित्यत्वेनानिर्मोक्षश्च स्यात्। अतो यावत् ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमो न तावत् भ्रान्तिरुपपादिता भवति। अनिर्वचनीयत्वं च किमभिप्रेतम्?। सदसद्विलक्षणत्वमिति चेत्, तथाविधस्य वस्तुनः प्रमाणशून्यत्वेनानिर्वचनीयतैव स्यात्। एतदुक्तं भवति सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यं, सर्वा च प्रतीतिः सदसदाकारा, सदसदाकारायाः प्रतीतेः सदसद्विलक्षणं विषय इत्यभ्युपगम्यमाने सर्वं, सर्वप्रतीतेर्विषयः स्यादिति॥

अथ स्याद्वस्तुस्वरूपतिरोधानकरमान्तरयाऽऽत्मरूपविविधाध्यासोपादानं सदसदनिर्वचनीयमविद्याज्ञानादिपदवाच्यं वस्तुयाथात्म्यज्ञाननिवर्त्यं ज्ञानप्रागभावातिरेकेण भावरूपमेव किञ्चिद्वस्तु प्रत्यक्षानुमानाभ्यां प्रतीयते। तदुपहितब्रह्मोपादानत्वाविकारे चिन्मात्रवपुषि तेनैव तिरोहितस्वरूपे प्रत्यगात्मन्यहङ्कारज्ञातृज्ञेयविभागरूपोऽध्यासः। तस्यैवावस्थाविशेषे बाह्याध्यासरूपे जगति ज्ञानबाध्यसर्परजतादिवस्तुतज्ज्ञानरूपोऽध्यासोऽपि जायते। कृत्स्नस्य मिथ्यारूपस्य तदुपादानस्य च मिथ्याभूतस्यार्थस्य मिथ्याभूतमेव कारणं भवितुमर्हतीति हेतुबलादवगम्यते। कारणाज्ञानविषयं प्रत्यक्षं तावदहमज्ञो मामन्यं च न जानामीत्यपरोक्षावभासः। अयन्तु न ज्ञानप्रागभावविषयः। स हि षष्ठप्रमाणगोचरः। अपि त्वहं सुखीतिवदपरोक्षः। अभावस्य प्रत्यक्षत्वाभ्युपगमेऽप्ययमनुभवो नात्मनि ज्ञानाभावविषयः, अनुभववेलायामपि ज्ञानस्य विद्यमानत्वात्, अविद्यमानत्वे ज्ञानाभावप्रतीत्यनुपपत्तेश्च। एतदुक्तं भवति, अहमज्ञ इत्यस्मिन्ननुभवेऽहमित्यात्मनोऽभावधर्मितया ज्ञानस्य च प्रतियोगितयाऽवगतिरस्ति वा न वा?। अस्ति चेत्, विरोधादेव न ज्ञानाभावानुभवसम्भवः। नो चेत्, धर्मिप्रतियोगिज्ञानसा-

ऽनपेक्षो ज्ञानाभावानुभवः सुतरां न सम्भवति । ज्ञानाभाव-स्यानुमेयत्वेऽभावाख्यप्रमाणविषयत्वे चेयमनुपपत्तिः समाना । अस्याज्ञानस्य भावरूपत्वे धर्मिप्रतियोगिज्ञानसद्भावेऽपि विरोधाभावादयमनुभवो भावरूपाज्ञानविषय एवाभ्युपगन्तव्य इति । ननु च भावरूपमज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यते । नैवम् । साक्षिचैतन्यं न वस्तुयाथा-त्म्यविषयमपि त्वज्ञानविषयम् । अन्यथा मिथ्यार्थावभासानुप-पत्तेः । न ह्यज्ञानविषयेण ज्ञानेनाज्ञानं निवर्तत इति न विरोधः । ननु चेदं भावरूपमप्यज्ञानं विषयविशेषव्यावृत्तमेव साक्षिचैत-न्यस्य विषयो भवति, स विषयः प्रमाणानधीनसिद्धिरिति कथमिव साक्षिचैतन्येनास्मदर्थव्यावृत्तमज्ञानं विषयीक्रियते । नैष दोषः, सर्वमेव वस्तुजातं ज्ञाततयाऽज्ञाततया वा साक्षि-चैतन्यस्य विषयभूतम् । तत्र जडत्वेन ज्ञाततया सिध्यत एव प्रमाणव्यवधानापेक्षा । अजडस्य तु प्रत्यग्वस्तुनः स्वयंसिध्यतो न प्रमाणव्यवधानापेक्षेति सदैवाज्ञानस्य व्यावर्तकत्वेनावभासो युज्यते । तस्मान्न्यायोपबृंहितेन प्रत्यक्षेण भावरूपमेवाज्ञानं प्रतीयते । तदिदं भावरूपमज्ञानमनुमानेनापि सिध्यति, विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरण-स्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशक-त्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । आलोकाभा-वमात्रं वा रूपदर्शनाभावमात्रं वा तमो न द्रव्यम् । तत्कथं भावरूपाज्ञानसाधने निदर्शनतयोपन्यस्यते तम इति चेत् । उच्यते, चक्षुरुपलभ्यविरलत्वाद्यवस्थायोगेन रूपवत्तया चोपलभ्ये-द्रव्यान्तरमेव तम इति निरवद्यमिति ॥

अत्रोच्यते, अहमज्ञो मामन्यं च न जानामीत्यत्रोपप-त्तिसहितेन केवलेन च प्रत्यक्षेण न भावरूपमज्ञानं प्रतीयते । यस्तु ज्ञानप्रागभावविषयत्वे विरोध उक्तः, स हि भावरूपा-ज्ञानेऽपि तुल्यः । विषयत्वेनाश्रयत्वेन चाज्ञानस्य व्यावर्त-कतया प्रत्यगर्थः प्रतिपन्नोऽप्रतिपन्नो वा ? । प्रतिपन्नश्चेत्, तत्स्वरूपज्ञाननिवर्त्यं तदज्ञानं तस्मिन् प्रतिपन्ने कथमिव ति-ष्ठति । अप्रतिपन्नश्चेत्, व्यावर्तकाश्रयविषयज्ञानशून्यमज्ञानं कथमनुभूयेत । अथ विशदस्वरूपावभासोऽज्ञानविरोधी, अवि-

शदस्वरूपं तु प्रतीयत इत्याश्रयविषयज्ञाने सत्यपि नाज्ञानानुभवविरोध इति। हन्त तर्हि ज्ञानप्रागभावोऽपि विशदस्वरूपविषयः, आश्रयप्रतियोगिज्ञाने त्वविशदस्वरूपविषयमिति न कश्चिद्विशेषोऽन्यत्राभिनिवेशात्। भावरूपस्याज्ञानस्यापि, अज्ञानमिति सिद्धेः प्रागभावसिद्धाविव सापेक्षत्वमस्त्येव। तथा हि—अज्ञानमिति ज्ञानाभावः, तदन्यः, तद्विरोधी वा? । त्रयाणामपि तत्स्वरूपज्ञानापेक्षाऽवश्याश्रयणीया। यद्यपि तमःस्वरूपप्रतिपत्तौ प्रकाशापेक्षा न विद्यते, तथाऽपि प्रकाशविरोधीत्यनेनाकारेण प्रतिपत्तौ प्रकाशप्रतिपत्त्यपेक्षाऽस्त्येव। भवदभिमताज्ञानं न कदाचित्स्वरूपेण सिद्ध्यति, अपि त्वज्ञानमित्येव। तथा सति ज्ञानाभाववत् तदपेक्षत्वं समानम्। ज्ञानप्रागभावस्तु भवताऽप्यभ्युपगम्यते प्रतीयते च, इत्युभयाभ्युपेतो ज्ञानप्रागभाव एव "अहमज्ञो मामन्यं च न जानामि" इत्यनुभूयत इत्यभ्युपगन्तव्यम्। नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणोऽज्ञानानुभवश्च न संभवति, स्वानुभवस्वरूपत्वात्। स्वानुभवस्वरूपमपि तिरोहितस्वरूपमज्ञानमनुभवतीति चेत्। किमिदं तिरोहितस्वस्वरूपत्वम्। अप्रकाशितस्वरूपत्वमिति चेत्, स्वानुभवस्वरूपस्य कथमप्रकाशितस्वरूपत्वम्। स्वानुभवस्वरूपस्याप्यन्यतोऽप्रकाशितस्वरूपत्वमापद्यत इति चेत्। एवं तर्हि प्रकाशाख्यधर्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वादन्यतःस्वरूपनाश एव स्यादिति पूर्वमेवोक्तम्। किं च ब्रह्मस्वरूपतिरोधानहेतुभूतमेतदज्ञानं स्वयमनुभूतं सत् ब्रह्म तिरस्करोति ब्रह्म तिरस्कृत्य स्वयं तदनुभवविषयो भवतीत्यन्योन्याश्रयणम्। अनुभूतमेव तिरस्करोतीति चेत्। यद्यतिरोहितस्वरूपमेव ब्रह्माज्ञानमनुभवति, तदा तिरोधानकल्पना निष्प्रयोजना स्यात् अज्ञानस्वरूपकल्पना च, ब्रह्मणोऽज्ञानदर्शनवदज्ञानकार्यतयाऽभिमतप्रपञ्चदर्शनस्यापि संभवात्। किं च ब्रह्मणोऽज्ञानानुभवः किं स्वतोऽन्यतो वा? । स्वतश्चेत्, अज्ञानानुभवस्य स्वरूपप्रयुक्तत्वेनानिर्मोक्षः स्यात्, अनुभूतिस्वरूपस्य ब्रह्मणोऽज्ञानानुभवस्वरूपत्वेन मिथ्यात्वजनकबाधकज्ञानेन स्वतोऽनुभवस्यापि निवृत्तिवत् निवर्तकज्ञानेनाज्ञानानुभूतिरूपब्रह्मस्वरूपनिवृत्तिर्वा।

मन्यतश्चेत् किं तदन्यत् । अज्ञानान्तरमिति चेत् अनवस्था स्यात् । ब्रह्मतिरस्कृत्यैव स्वयमनुभवविषयो भवतीति चेत्, तथा सतीदमज्ञानं काचादिवत् स्वसत्तया ब्रह्म तिरस्करोतीति ज्ञानाश्रयत्वमज्ञानस्य न स्यात् । अथेदमज्ञानं स्वयमनादि ब्रह्मणः स्वभासित्वं ब्रह्मस्वरूपतिरस्कृतिं च युगपदेव करोति, अतो नानवस्थादयो दोषा इति । नैतत्, स्वानुभवस्वरूपस्य ब्रह्मणः स्वरूपतिरस्कृतिमन्तरेण भासित्वापादनायोगात् । हेत्वन्तरेण तिरस्कृतमिति चेत्, तच्च ज्ञानादित्वमपास्तम्, अनवस्था च पूर्वोक्ता। अतिरस्कृतस्वरूपस्यैव भासित्वापादने ब्रह्मणः स्वानुभवैकतानता च न स्यात् । अपि चाविद्यया ब्रह्मणि तिरोहिते तद् ब्रह्म न किंचिदपि प्रकाशते, उत किंचित्प्रकाशते? । पूर्वस्मिन् कल्पे प्रकाशमात्रस्वरूपस्य ब्रह्मणोऽप्रकाशे तुच्छतापत्तिरसकृदुक्ता । उत्तरस्मिन् कल्पे सच्चिदानन्दैकरसे ब्रह्मणि कोऽयमंशः तिरस्क्रियते को वा प्रकाशते । निरंशे निर्विशेषे प्रकाशमात्रे वस्तुन्याकारद्वयासंभवेन तिरस्कारः प्रकाशश्च युगपन्न संगच्छेते । अथ सच्चिदानन्दैकरसं ब्रह्माविद्यया तिरोहितस्वरूपमविशदमिवालक्ष्यत इति । प्रकाशमात्रस्वरूपस्य विशदताऽविशदता वा किं रूपा? । एतदुक्तं भवति, यस्याशेषविशेषः प्रकाशविषयः तस्य सकलावभासो विशदावभासः, कतिपयविशेषरहितावभासस्त्वविशदावभासः । तत्र च आकारोऽप्रतिपन्नः तद्विषयांशे प्रकाशाभावादेव प्रकाशावैशद्यं न विद्यते यश्चांशः प्रतिपन्नस्तस्मिन्नंशे तद्विषयप्रकाशो विशद एव, अतः सर्वत्र प्रकाशावैशद्यं न संभवति । विषयेऽपि स्वरूपे प्रतीयमाने तद्गतकतिपयविषयविशेषाप्रतीतिरेवावैशद्यं, तस्मादविषये निर्विशेषे प्रकाशमात्रे ब्रह्मणि स्वरूपे प्रकाशमाने कतिपयविशेषाप्रतीतिरूपावैशद्यं नामाज्ञानकार्यं न संभवतीति । अपि चेदमविद्याकार्यमवैशद्यं तत्त्वज्ञानोदयान्निवर्तते न वा । अनिवृत्तावपवर्गाभावः । निवृत्तौ च वस्तु किंरूपमिति विवेचनीयम् । विशदस्वरूपमिति चेत्, तद्विशदस्वरूपं प्रागस्ति वा न वा । अस्ति चेत्, अविद्याकार्यमवैशद्यं तन्निवृत्तिश्च न स्याताम् । नो चेत्, मोक्षस्य कार्यतया अनित्यता स्यात् । अस्याज्ञानस्याश्रयनिरूपणादेवासंभवः पूर्वमेवोक्तः। अपि चापरमार्थदोषमूलभ्रमादिना निरधिष्ठानभ्रमासंभवोऽपि दुरुपादः, भ्रमहेतुभूतदोषदोषाश्रयत्व-

वत् अधिष्ठानपारमार्थ्येऽपि भ्रमोपपत्तेः। ततश्च सर्वशून्यत्वमेव स्यात्॥ यदुक्तमनुमानेनापि भावरूपमज्ञानं सिद्ध्यतीति, तदयुक्तम्, अनुमानाभासत्वात्। ननूक्तमनुमानं सत्यमुक्तम्, दुरुक्तं तु तत्। अज्ञानेऽप्यनभिमताज्ञानान्तरसाधनेन विरुद्धत्वाद्धेतोः। तदज्ञानान्तरासाधने हेतोरनैकान्त्यम्। साधने च तदज्ञानमज्ञान(१)साक्षित्वं निवारयति, तत्प्रथमाज्ञानकल्पना निष्फला स्यात्। दृष्टान्तश्च साधनविकलः, प्रदीपप्रभाया अप्रकाशितार्थप्रकाशकत्वाभावात्। सर्वत्र हि ज्ञानस्यैव प्रकाशकत्वं, सत्यपि दीपे विज्ञानेन विना विषयप्रकाशाभावात्, इन्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमेव न प्रकाशकत्वम्। प्रदीपप्रभायास्तु चक्षुरिन्द्रियस्य ज्ञानमुत्पादयतो विरोधितमोनिरसनद्वारेणोपकारकत्वमात्रमेव। प्रकाशकज्ञानोत्पत्तौ व्याप्रियमाणचक्षुरिन्द्रियोपकारकत्वहेतुत्वमपेक्ष्य दीपस्य प्रकाशकत्वव्यवहारः। नात्यन्ताभिधानतुल्यप्रकाशकत्वाभ्युपगमेन दीपप्रभा निदर्शिता, अपि तु ज्ञानस्येव स्वविषयावरणनिरसनपूर्वप्रकाशकत्वमङ्गीकृत्येति चेत्। न, न हि विरोधिनिरसनमात्रं प्रकाशकत्वम्, अपि स्वरूपपरिच्छेदः। व्यवहारयोग्यतापादनमिति यावत्। तच्च ज्ञानस्यैव। यद्युपकारकाणामप्यप्रकाशितार्थप्रकाशकत्वमङ्गीकृतं, तर्हीन्द्रियाणामुपकारकतमत्वेनाप्रकाशितार्थप्रकाशकत्वमङ्गीकरणीयम्। तथा सति तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात् हेतोरनैकान्त्यमित्यलमनेन।

प्रतिप्रयोगाश्च—विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्माश्रयम्, अज्ञानत्वात्, शुक्तिकाद्यज्ञानवत्, ज्ञात्राश्रयं हि तत्। विवादाध्यासितमज्ञानं न ज्ञानावरणम्, अज्ञानत्वात्, शुक्तिकाद्यज्ञानवत्, विषयावरणं हि तत्। विवादाध्यासितमज्ञानं न ज्ञाननिवर्त्यं, ज्ञानविषयानावरणत्वात्, यज्ज्ञाननिवर्त्यमज्ञानं तज्ज्ञानविषयावरणं, यथा शुक्तिकाद्यज्ञानम्। ब्रह्म नाज्ञानास्पदं, ज्ञातृत्वविरहात्, घटवत्। ब्रह्म नाज्ञानावरणम्, ज्ञानाविषयत्वात्, यदज्ञानावरणं तज्ज्ञानविषयभूतं, यथा शुक्तिकादि। ब्रह्म [redacted] ज्ञाननिवर्त्याज्ञानं, ज्ञानाविषयत्वात्, यज्ज्ञाननिवर्त्याज्ञानं तज्ज्ञानविषयभूतं, यथा शुक्त्यादि। विवा-

(१) तदज्ञानमज्ञानसाक्षित्वं निवारयतीति पाठान्तरम्।

दाध्यासितं प्रमाणज्ञानं स्वप्रागभावातिरिक्तज्ञानपूर्वं न भवति, प्रमाणज्ञानत्वात्, भवदभिमताज्ञानसाधकप्रमाणज्ञानवत्। ज्ञानं न वस्तुनो विनाशकम्, शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात्, यत् वस्तुनो विनाशकं तत् शक्तिविशेषोपबृंहितं ज्ञानमज्ञानं च दृष्टम्, यथेश्वरयोगिप्रभृतिज्ञानम्, यथा च मुद्गरादि। भावरूपमज्ञानं न ज्ञानविनाश्यम्, भावरूपत्वात्, घटादिवदिति। यथोच्येत बाधकज्ञानेन भावरूपाणां पूर्वज्ञानोत्पन्नानां भयादीनां विनाशो दृश्यत इति। नैवम्, न हि ज्ञानेन तेषां विनाशः, क्षणिकत्वेन तेषां स्वयमेव विनाशात्, कारणनिवृत्त्या च पश्चादनुत्पत्तेः। क्षणिकत्वं च तेषां ज्ञानवदुत्पत्तिकारणसन्निधान एवोपलब्धेरन्यथाऽनुपलब्धेश्चावगम्यते। अक्षणिकत्वे च तेषां भयादीनां भयादिहेतुभूतज्ञानसन्तानविशेषेण सर्वेषां ज्ञानानां भयाद्युत्पत्तिहेतुत्वेनानेकभयोपलब्धिप्रसङ्गाच्च। स्वप्रागभावातिरिक्तवस्त्वन्तरपूर्वकमिति व्यर्थविशेषणोपादानेन प्रयोगकुशलता चाविष्कृता। अतो नानुमानेनापि भावरूपाज्ञानसिद्धिः॥

शुक्तिरजतयोरनिर्वाच्यत्वमज्ञानासिद्धेरनन्तरमेव वक्ष्यते। मिथ्याऽर्थस्य मिथ्यैवोपादानं भवितुमर्हतीत्येतदपि "न विलक्षणत्वादि"त्येतदधिकरणन्यायेन परिहृयते। अतोऽनिर्वचनीयाज्ञानविषया न कदाचिदपि प्रतीतिरस्ति। प्रतीतिभ्रान्तिबाधैरपि न तथाऽभ्युपगमनीयम्। प्रतीयमानमेव हि प्रतीतिभ्रान्तिबाधविषयः, याभिः प्रतीतिभिः प्रतीत्यन्तरेण चानुपलभ्यमानो विषय इति न युज्यते कल्पयितुम्। शुक्त्यादिषु रजतादिप्रतीतिः प्रतीतिकालेऽपि नास्तीति बाधेन चान्यस्यान्यथाभानायोगाच्च सदसदनिर्वचनीयमपूर्वमेवेदं रजतं दोषवशात्प्रतीयत इति कल्पनीयमिति चेत्। न, तत्कल्पनायामप्यन्यस्यान्यथाभानस्यावर्जनीयत्वात्, अन्यथाभानाभ्युपगमादेव ख्यातिप्रवृत्तिबाधभ्रमत्वानामुपपत्तेः, अत्यन्तापरिदृष्टाकारणकवस्तुकल्पनायोगात्। कल्प्यमानं हीदमनिर्वचनीयम्। न च तदानीमनिर्वचनीयमिति प्रतीयते अपि तु परमार्थरजतमित्येव। अनिर्वचनीयमित्येव प्रतीतं चेत्, भ्रान्तिबाधयोः प्रवृत्तेरप्यसंभवः। अतोऽन्यस्यान्यथाऽव-

भ्रमविरहे प्रतीतिप्रवृत्तिबाधभ्रमत्वानामनुपपत्तेः तस्यापरिहार्यत्वाच्च शुक्त्यादिरेव रजताद्याकारेणाऽवभासत इति भवताऽभ्युपगन्तव्यम्। ख्यात्यन्तरवादिनां च सुदूरमपि गत्वाऽन्यस्याऽन्यथाऽवभासोऽवश्याश्रयणीयः, असत्ख्यातिपक्षे सदात्मना, आत्मख्यातिपक्षे चार्थात्मना, अख्यातिपक्षेऽप्यन्यविशेषणमन्यविशेषणत्वेन च, ज्ञानद्वयमेकत्वेन च, विषयासद्भावपक्षेऽपि विद्यमानत्वेन। किंचानिर्वचनीयमपूर्वं रजतमत्र जातमिति वदता तस्य जन्मकारणं वक्तव्यम्। न तावत् तत्प्रतीतिः, तस्यास्तद्विषयत्वेन तदुत्पत्तेः प्रागात्मलाभायोगात्। निर्विषया जाता तदुत्पाद्य तदेव विषयीकरोतीति महतामिदमुपपादनम्। अथेन्द्रियादिगतो दोषः। तच्च, तस्य पुरुषाश्रयत्वेनार्थगतकार्योत्पादकत्वायोगात्। नापीन्द्रियाणि, तेषां ज्ञानकारणत्वात्। नापि दुष्टानीन्द्रियाणि, तेषामपि स्वकार्यभूते ज्ञान एव हि विशेषकरत्वम्। अनादिमिथ्याज्ञानोपादानत्वं तु पूर्वमेव निरस्तम्। किंचापूर्वमनिर्वचनीयमिदं वस्तुजातं रजतादिबुद्धिशब्दाभ्यां कथमिव विषयीक्रियते न घटादिबुद्धिशब्दाभ्याम्। रजतादिसादृश्यादिति चेत्; तर्हि सत्यरजतमित्येव प्रतीतिशब्दौ स्याताम्। रजतादिजातियोगादिति चेत्; सा किं परमार्थभूता उतापरमार्थभूता वा। न तावत्परमार्थभूता, तस्या अपरमार्थान्वयायोगात्। नाप्यपरमार्थभूता, परमार्थान्वयायोगादपरमार्थे परमार्थबुद्धिशब्दयोर्निर्वाहकत्वायोगाच्चेत्यलमपरिपक्वकुतर्कनिरसनेन॥

अपि च

यथार्थं सर्वविज्ञानमिति वेदविदां मतम्।
श्रुतिस्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः॥
बहु स्यामिति संकल्पपूर्वसृष्ट्युपक्रमे।
तासां त्रिवृतमेकैकामिति श्रुत्यैव चोदितम्॥
त्रिवृत्करणमेवं हि प्रत्यक्षेणोपलभ्यते।
यदग्ने रोहितं रूपं तेजसस्तदपामपि॥
शुक्लं कृष्णं पृथिव्याश्चेत्यग्नावेव त्रिरूपता।
श्रुत्यैव दर्शिता तस्मात्सर्वं सर्वत्र सङ्गताः॥

पुराणे चैवमेवोक्तं वैष्णवे सृष्ट्युपक्रमे ।
"नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ॥
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ।
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ॥
महदाद्या विशेषान्ता ह्यण्डमित्यादिना ततः ।
भूतकारेऽपि भूतानां त्रिरूपत्वं तथाऽब्रवत् ॥
त्र्यात्मकत्वात्तु भूयस्त्वादिति तेनाभिधाभिदा ।
सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम् ॥
सोमावयवसद्भावादिति न्यायविदो विदुः ।
व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः ॥
तदेव सदृशं तस्य यत् तद्द्रव्यैकदेशभाक् ।
शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव चोदितः ॥
रूप्यशुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः ।
रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते ॥
अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः ।
कदाचिच्चक्षुरादेस्तु दोषात् शुक्त्यंशवर्जितः ॥
रजतांशो गृहीतोऽतो रजतार्थी प्रवर्तते ।
दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्तते ॥
अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु ।
बाध्यबाधकभावोऽपि भूयस्त्वेनोपपद्यते ॥
शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहणेन तु ।
नातो मिथ्यार्थसत्यार्थविषयत्वनिबन्धनः ॥
एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः ।

स्वप्ने च प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्यास्तत्तत्कालावसानास्तथाभूताश्चार्थाः सृज्यन्ते । तथा हि श्रुतिः स्वप्नविषया "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः सृजते न

तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्ताः पुष्करिण्यः सृजते स हि कर्ते'ति। यद्यपि सकलेतरपुरुषानुभाव्यतया तदानीं न भवन्ति, तथापि तत्तत्पुरुषमात्रानुभाव्यतया तथाविधानर्थानीश्वरः सृजति। "स हि कर्ता" तस्य सत्यसङ्कल्पस्याश्चर्यशक्तेस्तथाविधं कर्तृत्वं संभवतीत्यर्थः। "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते, तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चने"ति च। सूत्रकारोऽपि "सन्ध्ये सृष्टिराह हि", "निर्मातारं चैके पुत्रादयश्चे"ति सूत्रद्वयेन स्वाप्नेष्वर्थेषु जीवस्य स्रष्टृत्वमाशङ्क्य "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि"त्यादिना न जीवस्य संकल्पमात्रेण स्रष्टृत्वमुपपद्यते, जीवस्य स्वाभाविकसत्यसंकल्पत्वादेः कृत्स्नस्य संसारदशायामनभिव्यक्तस्वरूपत्वात्, ईश्वरस्यैव तत्तत्पुरुषमात्रानुभाव्यतया चाश्चर्यभूता सृष्टिरियम्, "तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चने"ति परमात्मैव तत्र स्रष्टेत्यवगम्यत इति परिहरति। अपवरकादिषु शयानस्य स्वप्नदृशः स्वदेहेनैव देशान्तरगमनराज्याभिषेकशिरश्छेदादयश्च पुण्यपापफलभूताः शयानदेहसरूपसंस्थानदेहान्तरसृष्ट्योपपद्यन्ते। पीतशङ्खादौ तु नयनवर्तिपित्तद्रव्यसंभिन्ना नायनरश्मयः शङ्खादिभिः संयुज्यन्ते, तत्र पित्तगतपीतिमाभिभूतः शङ्खगतशुक्लिमा न गृह्यते, अतः सुवर्णानुलिप्तशङ्खवत् पीतः शङ्ख इति प्रतीयते, पित्तद्रव्यं तद्गतपीतिमा चातिसूक्ष्मतया पार्श्वस्थैर्न गृह्यते। पित्तोपहतेन तु स्वनयननिष्क्रान्ततयाऽतिसामीप्यात् सूक्ष्ममपि गृह्यते, तद्ग्रहणजनितसंस्कारसचिवनयनरश्मिभिर्दूरस्थमपि गृह्यते। जपाकुसुमसमीपवर्तिस्फटिकमणिरपि तत्प्रभाभिभूततया रक्त इति गृह्यते। जपाकुसुमप्रभा विततापि स्वच्छद्रव्यसंयुक्ततया स्फुटतरमुपलभ्यत इत्युपलब्धिव्यवस्थाप्यमिदम्। मरीचिकाजलज्ञानेऽपि तेजःपृथिव्योरप्यम्बुनो विद्यमानत्वादिन्द्रियदोषेण तेजःपृथिव्योरग्रहणाददृष्टवशाच्चाम्बुनो ग्रहणात् याथार्थ्यम्। अलातचक्रेऽप्यलातस्य द्रुततरगमनेन सर्वदेशसंयोगादन्तरालाग्रहणात्तथा प्रतीतिरुपपद्यते, चक्रप्रतीतावप्यन्तरालाग्रहणपूर्वकतत्तद्देशसंयुक्तालातग्रहणमेव, क्वचिदन्तरालाभावाद

न्तरालाग्रहणं क्वचिद्भेदाग्रहणमिति विशेषः, अतस्तदपि यथार्थम् । दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्था, दर्पणादिप्रतिहतनयनयो र्हि नायनरश्मयो दर्पणादिदेशग्रहणपूर्वकं निजमुखादि गृह्णन्ति, तदाऽप्यतिशैघ्र्यादन्तरालाग्रहणात्तथा प्रतीतिः । द्विचन्द्रेऽपि दिगन्तरस्थाभ्यां द्विधा भिद्यमानत्वादङ्गुष्ठयोगेनैतद्विभागविधुतो दिगन्तरांशो गृह्यते, अतो दिगन्तरप्रतीतिर्यथार्थैव । द्विचन्द्रज्ञानादावप्यङ्गुल्यवष्टम्भतिमिरादिभिर्नायनतेजोगतिभेदेन सामग्रीभेदात्सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भव[1]ति, तत्रैका सामग्री स्वदेशविशिष्टचन्द्रं गृह्णाति, द्वितीया तु किंचिद्वक्रगतिश्चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति, अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणेऽपि ग्रहणभेदेन ग्राह्याकारभेदादेकत्वग्रहणाभावाच्च द्वौ चन्द्राविति भवति प्रतीतिविशेषः, देशान्तरस्य तद्विशेषणत्वं देशान्तरस्य चागृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवति, तत्र सामग्रीद्वित्वं पारमार्थिकम्, तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकम्, ग्रहणद्वित्वेन चन्द्रस्यैव ग्राह्याकारद्वित्वं च पारमार्थिकम्, तत्र विशेषणद्वयविशिष्टचन्द्रग्रहणद्वयस्यैक एव चन्द्रो ग्राह्य इति ग्रहणे प्रत्यभिज्ञानवत् केवलचक्षुषः सामर्थ्याभावात् चाक्षुषं ज्ञानं तथैवावतिष्ठते, द्वयोः चक्षुषोरेकसामग्र्यन्तर्भावेऽपि तिमिरादिदोषभिन्नं चाक्षुषं तेजः सामग्रीद्वयं भवतीति कार्यकल्प्यम्, अपगते तु दोषे स्वदेशविशिष्टस्य चन्द्रस्यैकग्रहणविषयत्वादेक[3]चन्द्र इति भवति प्रत्ययः, दोषकृतं तु सामग्रीद्वित्वं तत्कृतं ग्रहणद्वित्वं तत्कृतं ग्राह्याकारद्वित्वं चेति निरवद्यम् । अतः सर्वं विज्ञानजातं यथार्थमिति सिद्धम् ॥

ख्यात्यन्तराणां दूषणानि तैस्तैर्वादिभिरेव प्रपञ्चितानीति न तत्र यत्नः क्रियते । अथवा किमनेन वस्तुनोपपादनप्रकारेण, प्रत्यक्षानुमानागमाख्यप्रमाणत्रयम् आगमगम्यं च निरस्तनिखिलदोषगन्धमनवधिकाति-

---

१ अविप्रकृष्टरहितः पुस्तकान्तरपाठः ।
२ भविष्यतीति तु पुस्तकान्तरपाठः ।
३ एकश्चन्द्र इति पाठान्तरम् ।

शयासंख्येयकल्याणगुणगणं सर्वज्ञं सत्यसङ्कल्पं परं ब्रह्माभ्युपगच्छतां किं न सेत्स्यति, किं नोपपद्यते । भगवता हि परेण ब्रह्मणा क्षेत्रज्ञपुण्यपापानुगुणं तद्भोग्यत्वायाखिलं जगत्सृजता सुखदुःखोपेक्षाफलानुभवानुभाव्याः पदार्थाः सर्वसाधारणानुभवविषयाः, केचन तत्तत्पुरुषमात्रानुभवविषयाः तत्तत्कालावसानास्तथाविधानुभाव्याः सृज्यन्ते । तत्र बाध्यबाधकभावः सर्वानुभवविषयतया तद्रहिततया चोपपद्यत इति सर्वं समञ्जसम् ॥

यत्पुनः सदसदनिर्वचनीयमज्ञानं श्रुतिसिद्धमिति, तदसत्, "अनृतेन हि प्रत्यूढा" इत्यादिष्वनृतशब्दस्यानिर्वचनीयानभिधायित्वात्, ऋतेतरविषयो ह्यनृतशब्दः । ऋतमिति कर्माभिधीयते, "ऋतं पिबन्तावि"ति वचनात् । ऋतं कर्म फलाभिसन्धिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलम् । अत्र तद्व्यतिरिक्तं सांसारिकफलं कर्मानृतं ब्रह्मप्राप्तिविरोधि, "एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढा" इति वचनात् । 'नासदासीन्नो सदासीत्तदानीमि"त्यत्रापि सदसच्छब्दौ चिदचिद्व्यष्टिविषयौ, उत्पत्तिवेलायां सत्त्यच्छब्दाभिहितयोश्चिदचिद्व्यष्टिभूतयोर्वस्तुनोरप्ययकालेऽचित्समष्टिभूते तमःशब्दाभिधेये वस्तुनि प्रलयप्रतिपादनपरत्वादस्य वाक्यस्य, नात्र कस्यचित्सदसदनिर्वचनीयतोच्यते, सदसतोः कालविशेषेऽसद्भावमात्रवचनात् । अत्र तमःशब्दाभिहितस्याचित्समष्टित्वं श्रुत्यन्तरादवगम्यते "अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमः परे देव एकीभवती" ति । सत्यम्, तमःशब्देनाचित्समष्टिरूपायाः प्रकृतेः सूक्ष्मावस्थोच्यते, तस्यास्तु "माया तु प्रकृतिं विद्यादि"ति मायाशब्देनाभिधानादनिर्वचनीयत्वमिति चेत् । नैतदेवम्, मायाशब्दस्यानिर्वचनीयवाचित्वं न दृष्टमिति । मायाशब्दस्य मिथ्यापर्यायत्वेनानिर्वचनीयत्वमपि चेत् तदपि नास्ति । न हि सर्वत्र मायाशब्दो मिथ्याविषयः, असुरराक्षसास्त्रादिषु सत्येष्वेव मायाशब्दप्रयोगात् । यथोक्तम्—

"तेन मायासहस्रं तच्छम्बरस्याशुगामिना ।
बालस्य रक्षता देहमेकैकांशेन सूदितम्" ॥ इति ।

अतो मायाशब्दो विचित्रार्थसर्गकराभिधायी । प्रकृतेश्च मायाशब्दाभिधानं विचित्रार्थसर्गकरत्वादेव, "अस्मान् मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः" इति मायाशब्दवाच्यायाः प्रकृतेर्विचित्रार्थसर्गकरत्वं दर्शयति । परमपुरुषस्य च तद्वत्तामात्रेण मायित्वमुच्यते नाज्ञत्वेन, जीवस्यैव हि मायया निरोधः श्रूयते "तस्मिंश्चान्यो मायया संनिरुद्धः" इति "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते" इति च । "इन्द्रो मायाभिरि"त्यत्रापि विचित्राः शक्तयोऽभिधीयन्ते । अत एव हि "भूरि त्वष्टेव राजत"इत्युच्यते, न मिथ्याभूतः कश्चिद्विराजते, "मम माया दुरत्यये"त्यत्रापि "गुणमयी"ति वचनात्सैव त्रिगुणात्मिका प्रकृतिरुच्यत इति न श्रुतिभिः सदसदनिर्वचनीयाज्ञानप्रतिपादनम् । नाप्यैक्योपदेशानुपपत्त्या, न हि तत्त्वमसीति जीवपरयोरैक्योपदेशे सति सर्वज्ञे सत्यसङ्कल्पे सकलजगत्सर्गस्थितिविनाशहेतुभूते तच्छब्दावगते प्रकृते ब्रह्मणि विरुद्धाज्ञानपरिकल्पनाहेतुभूता काचिदप्यनुपपत्तिर्दृश्यते । ऐक्योपदेशस्तु त्वंशब्देनापि जीवशरीरकस्य ब्रह्मण एवाभिधानादुपपद्यतेतराम्, 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी' ति सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव हि नामरूपभाक्त्वमुक्तम् । अतो न ब्रह्माज्ञानपरिकल्पनम् ॥

इतिहासपुराणयोरपि न ब्रह्माज्ञानवादः क्वचिदपि दृश्यते । ननु "ज्योतींषि विष्णु"रिति ब्रह्मैकमेव तत्त्वमिति प्रतिज्ञाय "ज्ञानस्वरूपो भगवान् यतोऽसावि"ति शैलाब्धिधरादिभेदभिन्नस्य जगतो ज्ञानैकस्वरूपब्रह्माज्ञानविजृम्भितत्वमभिधाय "यदा तु शुद्धं निजरूपि" ति ज्ञानरूपस्यैव ब्रह्मणः स्वस्वरूपेणा[1]वस्थितिवेलायां वस्तुभेदाभावदर्शनेनाज्ञानविजृम्भितत्वमेव स्थिरीकृत्य 'वस्त्वस्ति किम्' "मही घटत्वमि" ति श्लोकद्वयेन जगदुपलब्धिप्रकारेणापि वस्तुभेदानामसत्यत्वमुपपाद्य 'तस्माद्विज्ञानमृत" इति प्रतिज्ञातं ब्रह्मव्यतिरिक्तस्यासत्यत्वमुपसंहृत्य "विज्ञानमेकमि" ति ज्ञानस्वरूपे ब्रह्मणि भेददर्शननिमित्ताज्ञानमूलं निजकर्मैवेति

१ स्वस्वरूपावस्थितिवेलायामिति पाठान्तरम् ।

स्फुटीकृत्य "ज्ञानं विशुद्धमि"ति ज्ञानस्वरूपस्य ब्रह्मणः स्वरूपं विशोध्य "सद्भाव एवं भवतो मयोक्त" इति ज्ञानस्वरूपस्य ब्रह्मण एव सत्यत्वं नान्यस्य, अन्यस्य चासत्यत्वमेव, तस्य भुवनादेः सत्यत्वं व्यावहारिकमिति तत्त्वं सम्यगुपदिष्टमेवेत्युपदेशो दृश्यते। नैतदेवम्। अत्र भुवनकोशस्य विस्तीर्णं स्वरूपमुक्त्वा पूर्वमनुक्तं रूपान्तरं संक्षेपतः श्रूयतामित्यारभ्याभिधीयते। चिदचिन्मिश्रे जगति चिदंशो वाङ्मनसागोचरः स्वसंवेद्यस्वरूपभेदो ज्ञानैकाकारतयाऽस्पृष्टप्राकृतभेदोऽविनाशित्वेनास्तिशब्दवाच्यः। अचिदंशस्तु चेतनकर्मनिमित्तपरिणामभेदो विनाशीति नास्तिशब्दाभिधेयः। उभयन्तु परब्रह्मभूतवासुदेवशरीरतया तदात्मकमित्येतद्रूपं संक्षेपेणाभिहितम्। तथा हि—

"यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा।
पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता"॥

इत्यम्बुनो विष्णोः शरीरत्वेन तत्परिणामभूतं ब्रह्माण्डमपि विष्णोः काय, तस्य च विष्णुरात्मेति सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्य सामानाधिकरण्यस्य "ज्योतींषि विष्णुरि"त्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनमित्याह। अस्मिन् शास्त्रे पूर्वमप्येतदसकृदुक्तम्, "तानि सर्वाणि तद्वपुः" "तत्सर्वं वै हरेस्तनुः" "स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः" इति। तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिशति "ज्योतींषि विष्णुरि"ति। अथास्त्यात्मकं नास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकमित्युक्तम्, इदमस्त्यात्मकमिदं नास्त्यात्मकम्। अस्य च नास्त्यात्मकत्वे हेतुरयमित्याह "ज्ञानस्वरूपो भगवान् यतोऽसावि"ति। अशेषक्षेत्रज्ञात्मनाऽवस्थितस्य भगवतो ज्ञानमेव स्वाभाविकं रूपं न देवमनुष्यादिवस्तुरूपम्, यत एव तत यथाचिद्रूपदेवमनुष्यशैलाब्धिधरादयश्च तद्विज्ञानविजृम्भिताः। तस्य ज्ञानैकाकारस्य सतो देवाद्याकारेण स्वात्मवैविध्यानुसन्धानमूला देवाद्याकारानुसन्धानमूलकर्ममूला इत्यर्थः। यतश्चाचिद्वस्तु क्षेत्रज्ञकर्मानुगुणपरिणा

मास्पदं ततस्तत् नास्तिशब्दाभिधेयम्, इतरदस्तिशब्दाभिधेयमित्यर्थादुक्तं भवति । तदेव विवृणोति "यदा तु शुद्धं निजरूपी"ति, यदैतद् ज्ञानैकाकारमात्मवस्तु देवाद्याकारेण स्वात्मनि वैविध्यानुसन्धानमूलसर्वकर्मक्षयात् निर्दोषं परिशुद्धं निजरूपि भवति, तदा देवाद्याकारेष्वैक्यात्मकल्पनामूलकर्मफलभूतास्तद्भोगार्थास्तु वस्तुषु वस्तुभेदा न भवन्ति । ये देवादिषु वस्तुष्वात्मतयाऽभिमतेषु भोग्यभूता देवमनुष्यशैलाब्धिधरादिवस्तुभेदास्ते तन्मूलभूतकर्मसु विनष्टेषु न भवन्तीत्यचिद्वस्तुनः कादाचित्कावस्थाविशेषयोगितया नास्तिशब्दाभिधेयत्वम्, इतरस्य सर्वदा निजसि[1]द्धज्ञानैकाकारत्वेन अस्तिशब्दाभिधेयत्वमित्यर्थः । प्रतिक्षणमन्यथाभूततया कादाचित्कावस्थायोगिनोऽचिद्वस्तुनो नास्तिशब्दाभिधेयत्वमेवेत्याह "वस्त्वस्ति किमि"ति । अस्तिशब्दाभिधेयो ह्यादिमध्यान्तहीनस्सततैकरूपपदार्थः, तस्य कदाचिदपि नास्तिबुद्ध्यनर्हत्वात् । अचिद्वस्तु किंचित् क्वचिदपि तथाभूतं न दृष्टचरम् । ततः किमित्यत्राह 'यच्चान्यथात्वमि''ति, यद्वस्तु प्रतिक्षणमन्यथात्वं याति तदुत्तरोत्तरावस्थाप्राप्त्या पूर्वपूर्वावस्थां जहातीति तस्य पूर्वावस्थस्योत्तरावस्थायां न प्रतिसन्धानमस्ति । अतः सर्वदा तस्य नास्तिशब्दाभिधेयत्वमेव । तथा ह्युपलभ्यत इत्याह "मही घटत्वमि"ति । स्वकर्मणा देवमनुष्यादिभावेन स्थितिमतात्मनिश्चयैः स्वभोग्यभूतमचिद्वस्तु प्रतिक्षणमन्यथाभूतमालक्ष्यते, अनुभूयत इत्यर्थः । एवं सति किमप्यचिद्वस्त्वस्तिशब्दार्हमादिमध्यान्तहीनं सततैकरूपमालक्षितमस्ति किम् । न ह्यस्तीत्यभिप्रायः । यस्मादेवं तस्मात् ज्ञानस्वरूपात्मव्यतिरिक्तमचिद्वस्तु कदाचित् क्वचित्केवलास्तिशब्दवाच्यं न भवतीत्याह "तस्मान्न विज्ञानमृते" इति । आत्मा तु सर्वत्र ज्ञानैकाकारतया देवादिभेदप्रत्यनीकस्वरूपोऽपि देवादिशरीरप्रवेशहेतुभूतस्वकृतविविधकर्ममूलदेवादिभेदभिन्नात्मबुद्धिभिस्तेन तेन रूपेण बहुधाऽनुसंहित इति तद्भेदानुसंधानं नात्मस्वरूपप्रयुक्तमित्यत्राह "विज्ञानमेकमि"ति । आत्मस्वरूपं तु कर्मरहितम्, तत एव मलरूपप्रकृतिस्पर्शरहितम्, ततश्च

१ निजशुद्धज्ञानैकस्वरूपत्वेनेति पाठान्तरम् ।

सत्ययुक्तशोकमोहलोभाद्यशेषहेयगुणासङ्गि, उपचयापचयानर्हतया एकम् अत एव सदैकरूपम् । तच्च वासुदेवशरीरमिति तदात्मकम्, अतदात्मकस्य कस्यचिदप्यभावादित्याह "ज्ञानं विशुद्धमि"ति । चिदंशस्सदैकरूपतया सर्वदाऽस्तिशब्दवाच्यः, अचिदंशस्तु प्रतिक्षणपरिणामित्वेन सर्वदा नाशगर्भ इति सर्वदा नास्तिशब्दाभिधेयः, एवंरूपचिदचिदात्मकं जगत् वासुदेवशरीरं तदात्मकमिति जगद्याथात्म्यं सम्यगुक्तमित्याह "सद्भाव एवमि"ति । अत्र सत्यमसत्यमिति यदस्ति यदा नास्तीति प्रक्रान्तस्योपसंहारः । एतत् ज्ञानैकाकारतया समस्तशब्दगोचरस्वरूपभेदमेवाविनिमिश्रं भुवनाश्रितं देवमनुष्यादिरूपेण सम्यग्व्यवहारार्हं भेदं यत् वर्तते तत्र हेतुः कर्मेत्युक्तमित्याह "एतत्तु यदि"ति, तदेव विवृणोति "यज्ञ पशुरि"ति । जगद्याथात्म्यज्ञानप्रयोजनं मोक्षोपाययतनमित्याह "यच्चैतदि"ति । अत्र निर्विशेषे परे ब्रह्मणि तदाश्रये सदसदनिर्वचनीये चाज्ञाने जगतस्तत्कल्पितत्वे चानुगुणं किंचिदपि पदं न दृश्यते । अस्तिनास्तिशब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत् परमस्य परेशस्य परस्य ब्रह्मणो विष्णोः कायत्वेन तदात्मकम्, ज्ञानैकाकारस्यात्मनो देवादिविविधाकारानुभवे अचित्परिणामे च हेतुर्वस्तुयाथात्म्यज्ञानविरोधि, क्षेत्रज्ञानां कर्मेति[2] प्रतिपादनात्, अस्तिनास्तिसत्यासत्यशब्दानां च सदसदनिर्वचनीयवस्त्वभिधानासामर्थ्याच्च । नास्त्यसत्यशब्दावस्तिसत्यशब्दविरोधिनौ, अतश्चैताभ्यामसत्त्वं हि प्रतीयते नानिर्वचनीयत्वम् । अत्र चाचिद्वस्तुनि नास्त्यसत्यशब्दौ न तुच्छत्वमिथ्यात्वपरौ प्रयुक्तौ, अपि तु विनाशित्वपरौ । "वस्त्वस्ति किम्" "मही घटत्वमि"त्यत्र विनाशित्वमेव ह्युपपादितम् न निष्प्रमाणकत्वं ज्ञानबाध्यत्वं वा एकेनाकारेणैकस्मिन्कालेऽनुभूतस्य कालान्तरे परिणामविशेषेणान्यथोपलब्ध्या नास्तित्वोपपादनात् । तुच्छत्वं हि प्रमाणसम्बन्धानर्हत्वम् । बाधोऽपि यद्देशकालादिसम्बन्धितया यदस्तीत्युपलब्धं तस्य तद्देशकालादिसम्बन्धितया नास्तीत्युपलब्धिः, न तु कालान्तरेऽनुभूतस्य कालान्तरे परिणामादिना

१ यद्वै ज्ञानैकाकारतया समस्तशब्दगोचरस्वरूपभेदवर्तीति पाठान्तरम् ।
२ कर्मैवेति पाठान्तरम् ।

नास्तीत्युपलब्धिः, कालभेदेन विरोधाभावात्, यतो न मिथ्यात्वम् । एतदुक्तं भवति, ज्ञानस्वरूपमात्मवस्त्वादिमध्यपर्यन्तरहितं सततैकरूपमिति स्वत एव सदाऽस्तिशब्दवाच्यम् । अचेतन तु क्षेत्रज्ञभोग्यभूतं तत्कर्मानुगुणपरिणामि विनाशीति सर्वदा नास्त्यर्थधर्ममिति नास्त्यसत्यशब्दाभिधेयमिति । यथोक्तम्,

"यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।
परिणामादिसम्भूतां तद्वस्तु नृप तच्च किम्" ॥
"अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।
तत्तु नास्ति न सन्देहो नाशिद्रव्योपपादितम्" ॥ इति ॥

देशकालकर्मविशेषापेक्षयाऽस्तित्वनास्तित्वयोगिनि वस्तुनि केवलास्तिबुद्धिबोध्यत्वमपरमार्थे इति ह्यपरमार्थे इत्युक्तम् । आत्मन एव केवलास्तिबुद्धिबोध्यत्वमिति स परमार्थ इत्युक्तम् । श्रोतुश्च मैत्रेयस्य

"विष्णुराधारं यथा चैतत्त्रैलोक्य समवस्थितम् ।
परमार्थश्च मे प्रोक्तो यथा ज्ञानं प्रधानतः" ॥

इत्याद्यनुभाषणाच्च, "ज्योतींषि विष्णुरि"त्यादिसामानाधिकरण्यस्य त्मशरीरभाव एव निबन्धनम्, चिदचिद्वस्तुनोश्चास्तिनास्तिशब्दप्रयोगनिबन्धनम्, ज्ञानस्याकर्मनिमित्तस्वाभाविकस्वरूपत्वेन स्वरूपप्राधान्यम्, अचिद्वस्तुनश्च तत्तत्कर्मनिमित्तपरिणामित्वेनाप्राधान्यमिति प्रतीयते ॥

यदुक्तं निर्विशेषवस्तुविज्ञानादेवाविद्यानिवृत्तिं वदन्ति श्रुतय इति, तदसत्, "वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसः परस्तात् तमेव विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" "न तस्येशे कश्चन तस्य नाम महद्यशः" "य एनं विदुरमृतास्ते भवन्ती"त्याद्यनेकवाक्यविरोधात् । ब्रह्मणः सविशेषत्वादेव सर्वाण्यपि वाक्यानि सविशेषविषयज्ञानादेव मोक्षं वदन्ति । शोधकवाक्यान्यपि सविशेषमेव वस्तु प्रतिपादयन्तीत्युक्तम् । तत्त्वमस्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यपरम्, तत्त्वम्पदयोः

मविशेषब्रह्माभिधायित्वात् । तत्पदं हि सर्वज्ञं सत्यसङ्कल्पं जगत्कारणं ब्रह्म परामृशतीति तु प्रतिपादयति, "तदैक्षत बहु स्याम्" इत्यादिषु तस्यैव प्रकृतत्वात् । तत्समानाधिकरणं त्वम्पदं चाचिद्विशिष्टजीवशरीरकं परं ब्रह्म प्रतिपादयति, प्रकारद्वयावस्थितैकवस्तुपरत्वात् सामानाधिकरण्यस्य । प्रकारद्वयपरित्यागे प्रवृत्तिनिमित्तभेदासम्भवेन सामानाधिकरण्यमेव परित्यक्तं स्यात्, द्वयोः पदयोर्लक्षणा च । सोऽयं देवदत्त इत्यत्रापि न लक्षणा, भूतवर्तमानकालसम्बन्धितयैक्यप्रतीत्यविरोधात्, देशभेदविरोधश्च कालभेदेन परिहृतः । "तदैक्षत बहु स्याम्" इत्युपक्रमविरोधश्च, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं च न घटते । ज्ञानस्वरूपस्य निरस्तनिखिलदोषस्य सर्वज्ञस्य समस्तकल्याणगुणात्मकस्याज्ञानं तत्कार्यानन्तापुरुषार्थाश्रयत्वं च न सम्भवति । बाधार्थत्वे च सामानाधिकरण्यस्य तत्त्वम्पदयोरधिष्ठानलक्षणा निवृत्तिलक्षणा चेति लक्षणाद्वयस्य एव दोषाः । इयांस्तु विशेषः—नेदं रजतमितिवत् अप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनम्, तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्च । अधिष्ठानं तु प्राक्तिरोहितम्, अतिरोहितस्वरूपं तत्पदेनोपस्थाप्यत इति चेत्, न, प्रागधिष्ठानाप्रकाशे तदाश्रयभ्रमबाधयोरसम्भवात् । भ्रमाश्रयमधिष्ठानमतिरोहितमिति चेत्, न, सदेवाधिष्ठानस्वरूपं भ्रमविरोधीति तत्प्रकाशे सुतरां न तदाश्रयभ्रमबाधौ । अतोऽधिष्ठानातिरेकिपारमार्थिकधर्मतत्तिरोधानानभ्युपगमे भ्रान्तिबाधौ दुरुपपादौ । अधिष्ठाने हि पुरुषमात्राकारे प्रतीयमाने तदतिरेकिणि पारमार्थिके राजत्वे तिरोहिते सत्येव व्याधत्वभ्रमः, राजत्वोपदेशेन च तन्निवृत्तिर्भवति नाधिष्ठानमात्रोपदेशेन, तस्य प्रकाशमानत्वेनानुपदेश्यत्वात्, भ्रमानुपमर्दित्वाच्च । जीवशरीरकजगत्कारणब्रह्मपरत्वे मुख्यवृत्तं पदद्वयं प्रकारद्वयविशिष्टैकवस्तुप्रतिपादनेन सामानाधिकरण्यं च सिद्धम्, निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्य ब्रह्मणो जीवान्तर्यामित्वमप्यैश्वर्यमपरं प्रतिपादितं भवति, उपक्रमानुकूलता च, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च, सूक्ष्मचिदचिद्वस्तुशरीरस्यैव ब्रह्मणः स्थूलचिदचिद्वस्तुशरीरत्वेन कार्यत्वात्,

"तमीश्वराणां परमं महेश्वरम्" "पराऽस्य शक्तिर्विविधैव श्रूयते"
"अपहतपाप्मा सत्यकामः सत्यसङ्कल्पः" इत्यादिश्रुत्यन्तराविरोधश्च ।
"तत्त्वमसी"त्यत्रोद्देश्योपादेयविभागः कथमिति चेत्, नात्र किंचिदुद्दिश्य
किमपि विधीयते, "ऐतदात्म्यमिदं सर्वमि"त्यनेनैव प्राप्तत्वात् । "अप्राप्ते
हि शास्त्रमर्थवत्" । "इदं सर्वमि"ति सजीवं जगन्निर्दिश्य "ऐतदात्म्य-
मि"ति "तस्यैव आत्मे"ति प्रतिपादितम्, तत्र च हेतुकः "सन्मूलास्सो-
म्येमाः सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठा" इति, 'सर्वं खल्विदं ब्रह्म
तज्जलानि"ति, शान्त इतिवत् । तथा श्रुत्यन्तराणि च ब्रह्मव्यति-
रिक्तस्य चिदचिद्वस्तुनश्च शरीरात्मभावमेव तादात्म्यं वदन्ति 'अन्तःप्र-
विष्टः शास्ता जनानां सर्वात्मा" "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो
यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त
आत्मा अन्तर्याम्यमृतः" 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न
वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मा अन्तर्या-
म्यमृतः" "यं पृथिवीमन्तरे संचरन्नि"त्यारभ्य "यस्य मृत्युः शरीरं यं
मृत्युर्न वेद एष सर्वभूतात्मा अपहतपाप्मा दिव्यो देव एको नारायणः"
"तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवदि"त्यादीनि ।
अत्र "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति ब्रह्मा-
त्मकजीवानुप्रवेशेनैव सर्वेषां वस्तुत्वं शब्दवाच्यत्वं च प्रतिपादितम्,
"तदनुप्रविश्य सच्च त्यच्चाभवदि"त्यनेनैकार्थ्यात् जीवस्यापि ब्रह्मात्म-
कत्वं ब्रह्मानुप्रवेशादेवेत्यवगम्यते । अतश्चिदचिदात्मकस्य सर्वस्य वस्तु
जातस्य ब्रह्मतादात्म्यमात्मशरीरभावादेवेत्यवगम्यते । तस्मात् ब्रह्मव्यति-
रिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात् तस्य प्रतिपादकोऽपि शब्द-
स्तत्पर्यन्तमेव स्वार्थमभिदधाति । अतः सर्वशब्दानां लोकव्युत्पत्त्यवगत-
तत्तत्पदार्थविशिष्टब्रह्माभिधायित्वं सिद्धमि"त्यैतदात्म्यमिदं सर्वमि"ति
प्रतिज्ञातार्थस्य "तत्त्वमसी"ति सामानाधिकरण्येन विशेषेणोपसंहारः ।
अतो निर्विशेषवस्त्वैक्यवादिनो भेदाभेदवादिनः, केवलभेदवादिनश्च
वैयधिकरण्येन सामानाधिकरण्येन च ब्रह्मात्मभावोपदेशाः सर्वे परि-

त्यक्ताः स्युः । एकस्मिन्वस्तुनि कस्य तादात्म्यमुपदिश्यते । तस्यैवेति चेत्, स्ववाक्येनावगतमिति न तादात्म्योपदेशावसेयमस्ति किञ्चित् । कल्पितभेदनिरसनमिति चेत्, तत्तु न सामानाधिकरण्यतादात्म्योपदेशावसेयमित्युक्तम्, सामानाधिकरण्यं तु ब्रह्मणि प्रकारद्वयप्रतिपादनेन विरोधमेवावहेत् । भेदाभेदवादे तु ब्रह्मण्येवोपाधिसंसर्गात्तत्प्रयुक्ता जीवगता दोषा ब्रह्मण्येव प्रादुःष्युरिति निरस्तनिखिलदोषकल्याणगुणात्मकब्रह्मात्मभावोपदेशा हि विरोधादेव परित्यक्ताः स्युः । स्वाभाविकभेदाभेदवादेऽपि ब्रह्मणः स्वत एव जीवभावाभ्युपगमात् गुणवद्दोषा अपि स्वाभाविका भवेयुरिति निर्दोषब्रह्मतादात्म्योपदेशो विरुद्ध एव । केवलभेदवादिनां चात्यन्तभिन्नयोः केनापि प्रकारेणैक्यासम्भवादेव ब्रह्मात्मभावोपदेशो[1] न सम्भवतीति सर्ववेदान्तपरित्यागः स्यात् । निखिलोपनिषत्प्रसिद्धं कृत्स्नस्य ब्रह्मशरीरभावमातिष्ठमानैः कृत्स्नस्य ब्रह्मतादात्म्यभावोपदेशाः सर्वे सम्यगुपपादिता भवन्ति । जातिगुणयोरिव द्रव्याणामपि शरीरभावेन विशेषणत्वेन गौरश्वो देवो मनुष्यो जातः पुरुषः कर्मभिरिति सामानाधिकरण्यं लोकवेदयोर्मुख्यमेव दृष्टचरम् । जातिगुणयोरपि हि द्रव्यप्रकारत्वमेव खण्डो गौः शुक्लः पट इति सामानाधिकरण्यनिबन्धनम्, मनुष्यत्वादिविशिष्टपिण्डानामप्यात्मनः प्रकारतयैव पदार्थत्वात् मनुष्यः पुरुषः षण्ढो योषिद् आत्मा जात इति सामानाधिकरण्यं सर्वत्रानुगतमिति प्रकारत्वमेव सामानाधिकरण्यनिबन्धनम्, न परस्परव्यावृत्ता जात्यादयः । स्वनिष्ठानामेव हि द्रव्याणां क्वचित्कदाचिद् द्रव्यविशेषणत्वे मत्वर्थीयप्रत्ययो दण्डी कुण्डलीति दृष्टः, न पृथक्प्रतिपत्तिस्थित्यनर्हाणां द्रव्याणाम्, तेषां विशेषणत्वं सामानाधिकरण्यावसेयमेव । यदि गौरश्वो मनुष्यो देवः पुरुषो योषित् षण्ढ आत्मा कर्मभिर्जात इत्यत्र खण्डो मुण्डो गौः शुक्लः पट इति जातिगुणवदात्मप्रकारत्वं मनुष्यादिशरीराणामिष्यते, तर्हि जातिव्यक्त्योरिव प्रकारप्रकारिणोः शरीरात्मनोरपि नियमेन सह प्रतिपत्तिः स्यात् । न

१ ब्रह्मात्मभावोपदेशा न सम्भवन्तीति पाठान्तरम् ।

वेवं दृश्यते, न हि नियमेन गोत्वादिवत् आत्माश्रयतयैवात्मना सह मनुष्यादिशरीरं पश्यन्ति, अतो मनुष्य आत्मेति सामानाधिकरण्यं लाक्षणिकमेव । नैतदेवम्, मनुष्यादिशरीराणामप्यात्मैकाश्रयत्वं तदेकप्रयोजनत्वं तत्प्रकारत्वं च जात्यादितुल्यम् । आत्मैकाश्रयत्वमात्मविश्लेषे शरीरविनाशादवगम्यते, आत्मैकप्रयोजनत्वं च तत्तत्कर्मफलभोगार्थतयैव सद्भावात्, तत्प्रकारत्वमपि देवो मनुष्य इत्यात्मविशेषणतयैव प्रतीतेः । एतदेव हि गवादिशब्दानां व्यक्तिपर्यन्तत्वे हेतुः, एतत्स्वभावविरहादेव दण्डादीनां विशेषणत्वे दण्डी कुण्डलीति मत्वर्थीयप्रत्ययः । देवमनुष्यादिपिण्डानामात्मैकाश्रयत्वतदेकप्रयोजनत्वतत्प्रकारत्वस्वभावात् देवो मनुष्य आत्मेति लोकवेदयोः सामानाधिकरण्येन व्यवहारः । जातिव्यक्त्योर्नियमेन सहप्रतीतिरुभयोश्चाक्षुषत्वात्, आत्मनस्त्वचाक्षुषत्वाच्चक्षुषा शरीरग्रहणवेलायामात्मा न गृह्यते । पृथग्ग्रहणयोग्यस्य प्रकारतैकस्वरूपत्वं दुर्घटमिति मा वोचः, जात्यादिवत् तदेकाश्रयत्वतदेकप्रयोजनत्वतद्विशेषणत्वैः शरीरस्यापि तत्प्रकारतैकस्वभावत्वावगमात् । सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वनिबन्धन इत्युक्तम् । यथा चक्षुषा पृथिव्यादेर्गन्धरसादिसम्बन्धित्वं स्वाभाविकमपि न गृह्यते, एवं चक्षुषो ग्रहणार्हं शरीरमात्मप्रकारतैकस्वभावमपि न तथा गृह्यते, आत्मग्रहणे चक्षुषः सामर्थ्याभावात् । नैतावता शरीरस्य तत्प्रकारत्वस्वभावविरहः, तत्प्रकारतैकस्वभावत्वमेव सामानाधिकरण्यनिबन्धनम्, आत्मप्रकारतया प्रतिपादनसमर्थस्तु शब्दः सदैव प्रकारतया प्रतिपादयति । ननु च शास्त्रेऽपि व्यवहारे शरीरशब्देन शरीरमात्र गृह्यत इति नात्मपर्यन्तता शरीरशब्दस्य । नैवम्, आत्मप्रकारभूतस्यैव शरीरस्य पदार्थविवेकप्रदर्शनाय निरूपकाख्या निष्कर्षकशब्दोऽयम्, यथा गोत्वं शुक्लत्वमाकृतिर्गुण इत्यादिशब्दाः । अतो गवादिशब्दवत् देवमनुष्यादिशब्दा आत्मपर्यन्ताः । एवं देवमनुष्यादिपिण्डविशिष्टाना जीवाना परमात्मशरीरतया तत्प्रकारत्वात् जीवात्मवाचिनः शब्दाः परमात्मपर्यन्ताः । अतः परस्य ब्रह्मणः प्रकारतयैव चिदचिद्वस्तुनः पदार्थत्वमिति तत्सामानाधिकर

त्वेन प्रयोगः । अयमर्थो वेदार्थसंग्रहे समर्थितः । एवमेव शरीरात्मभावलक्षणं तादात्म्यम् "आत्मेत्युपगच्छन्ती"ति वदति, "आत्मेत्येव तु गृह्णीयात्सर्वस्य"ति वाक्यकारश्च ।

अत्रेदं तत्त्वम्—अचिद्वस्तुनश्चिद्वस्तुनः परमस्य च ब्रह्मणो भोग्यत्वेन भोक्तृत्वेनेशितृत्वेन च स्वरूपविवेकमाहुः काश्चन श्रुतयः "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः" "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः," अमृताक्षरं हर इति भोक्ता निर्दिश्यते, प्रधानं स्वात्मनो भोग्यत्वेन हरतीति हरः, "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" "प्रधानक्षेत्रज्ञपतिर्गुणेशः" "पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्" "ज्ञाज्ञौ द्वावजावीशानीशौ" "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" "भोक्ता भोग्यं प्रेरितारं च मत्वा" "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः, जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमि[1]ति वीतशोक" इत्याद्याः । स्मृतावपि

"अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ।
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ॥
जीवभूतां महाबाहो ययेदं धार्यते जगत्" ।
"सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्" ॥

१ महिमानमेति इति पाठमनु सार्थोऽयं पठितमिति ।

"मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते" ॥
"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" ॥
"मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत" ॥ इति ।

जगद्योनिभूतं महद् ब्रह्म मदीयं प्रकृत्याख्यं भूतसूक्ष्ममचिद्वस्तु यत् तस्मिन् चेतनाख्यं गर्भं संयोजयामि । ततो मत्कृतात् चिदचित्संसर्गाद् देवादिस्थावरान्तानामचिन्मिश्राणां सर्वभूतानां सम्भवो भवतीत्यर्थः । एवं भोक्तृभोग्यरूपेणावस्थितयोरेस्सर्वावस्थावस्थितयोश्चिदचितोः परमपुरुषशरीरतया तन्नियाम्यत्वेन तदपृथक्स्थितिं परमपुरुषस्य चात्मत्वमाहुः काश्चन श्रुतयः "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद, यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयति" इत्यारभ्य "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इति । तथा "यः पृथिवीमन्तरे सञ्चरन्, यस्य पृथिवी शरीरं" यं पृथिवी न वेद इत्यारभ्य "योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" । अत्र मृत्युशब्देन तमःशब्दवाच्यं सूक्ष्मावस्थमचिद्वस्त्वभिधीयते । अस्यामेवोपनिषदि "अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते" इति वचनात्, "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इति च । एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव कार्यावस्थकारणावस्थजगद्रूपेणावतिष्ठत इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः कार्यावस्थं कारणावस्थं च जगत् स एवेत्याहुः । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यारभ्य "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इति, तथा "सोऽकामयत बहु स्यां प्रजायेय" इति "स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत"

इत्यारभ्य "सत्यं चानृतं च सत्यमभवत्" इत्याद्याः। अत्रापि श्रुत्यन्तरसिद्धचिदचितोः परमपुरुषस्य च स्वरूपविवेकः स्मारितः, "हन्ताहमिमास्तिस्रो देवता अनेन, जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" "तत्सृष्ट्वा तदेवानुप्राविशत् तदनु प्रविश्य सच्च त्यच्चाभवत् विज्ञानं चाविज्ञानं, च सत्यञ्चानृतं च सत्यमभवत्" इति च। अनेन जीवेनात्मनाऽनुप्रविश्येति जीवस्य ब्रह्मात्मकत्वं तदनु प्रविश्य सच्च त्यच्चाभवत् विज्ञानं चाविज्ञानं चेत्यनेनैकार्थ्यादात्मशरीरभावनिबन्धनमिति विज्ञायते। एवंभूतमेव नामरूपव्याकरणं "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इत्यत्राप्युक्तम्। अतः कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमपुरुष एवेति कारणात्कार्यस्यानन्यत्वेन कारणविज्ञानेन कार्यस्य ज्ञाततया एकविज्ञानेन सर्वविज्ञानं च समीहितमुपपन्नतरम्। "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति तिस्रो देवता इति सर्वमचिद्वस्तु निर्दिश्य तत्र स्वात्मकजीवानुप्रवेशेन नामरूपव्याकरणवचनात्सर्वे वाचकाः शब्दा अचिज्जीवविशिष्टपरमात्मन एव वाचका इति कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम्। अतः स्थूलसूक्ष्मचिदचित्प्रकारकं ब्रह्मैव कार्यं कारणं चेति ब्रह्मोपादानं जगत्, सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्मैव कारणमिति ब्रह्मोपादानत्वेऽपि संघातस्योपादानत्वेन चिदचितोर्ब्रह्मणश्च स्वभावासङ्करोऽप्युपपन्नतरः। यथा शुक्लकृष्णरक्ततन्तुसंघातोपादानत्वेऽपि चित्रपटस्य तत्तत्तन्तुप्रदेश एव शौक्ल्यादिसंबन्ध इति कार्यावस्थायामपि न सर्वत्र वर्णसङ्करः, तथा चिदचिदीश्वरसंघातोपादानत्वेऽपि जगतः कार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियन्तृत्वाद्यसङ्करः। तन्तूनां पृथक्स्थितियोग्यानामेव पुरुषेच्छया कदाचित्संहतानां कारणत्वं कार्यत्वं च। इह तु चिदचितोः सर्वावस्थावस्थितयोः परमपुरुषशरीरत्वेन तत्प्रकारतया पदार्थत्वात्। तत्प्रकारः परमपुरुषः सर्वदा सर्वशब्दवाच्य इति विशेषः। स्वभावभेदस्तदसङ्करश्च तत्र चात्र च तुल्यः। एवं च सति परस्य ब्रह्मणः कार्यानुप्रवेशेऽपि स्वरूपान्यथाभावाभावादविकृतत्वमुपपन्नतरम्।

स्थूलावस्थस्य नामरूपविभागविभक्तस्य चिदचिद्वस्तुन आ-
त्मतयाऽवस्थानात्कार्यत्वमप्युपपन्नतरम् । "अवस्थान्तरापत्ति-
रेव हि कार्यता । निर्गुणवादश्च परस्य ब्रह्मणो हेयगुणास-
म्बन्धादुपपद्यते । "अपहतपाप्मा विजरो विमृत्युर्विशोको
ऽविजिघत्सोऽपिपासः" इति हेयगुणान् प्रतिषिध्य "सत्यका-
मस्सत्यसङ्कल्पः" इति कल्याणगुणान् विदधतीयं श्रुतिरेवान्यत्र
सामान्येनावगतं गुणनिषेधं हेयगुणविषयं व्यवस्थापयति ।
ज्ञानस्वरूपं ब्रह्मेति वादश्च सर्वज्ञस्य सर्वशक्तेर्निखिलहेयप्रत्य-
नीककल्याणगुणाकरस्य ब्रह्मणःस्वरूपं ज्ञानैकनिरूपणीयं स्वप्र-
काशतया ज्ञानस्वरूपं चेत्युपगमादुपपन्नतरः । "यः सर्वज्ञः स-
र्ववित्"

"परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च" ।
"विज्ञातारमरे केन विजानीयात्"

इत्यादिका ज्ञातृत्वमावेदयन्ति, "सत्यं ज्ञानम्" इत्या-
दिकाश्च ज्ञानैकनिरूपणीयतया स्वप्रकाशतया च ज्ञान-
स्वरूपताम् । "सोऽकामयत बहु स्याम्" "तदैक्षत बहु स्याम्"
"तन्नामरूपाभ्यां व्याक्रियत" इति ब्रह्मैव स्वसङ्कल्पात् विचि-
त्रस्थिरत्रसरूपतया नानाप्रकारमवस्थितमिति तत्प्रत्यनीकाब्र-
ह्मात्मकवस्तुनानात्वमतथ्यमिति तत्प्रतिषिध्यते—"मृत्योः स
मृत्युमाप्नोति य इह नानेव पश्यति नेह नानास्ति किंचन"
"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य
सर्वमात्मैवाभूत्तत्केन कं पश्येत् तत्केन कं विजानीयात्"
इत्यादिना । न पुनः "बहु स्यां प्रजायेय" इत्यादिश्रुतिसिद्धं
स्वसङ्कल्पकृतं ब्रह्मणो नानानामरूपभाक्त्वेन नानाप्रकारत्व-
मपि निषिध्यते । "यत्र त्वस्य सर्वमात्मैवाभूत्" इति निषेधवा-
क्यादौ च तत् स्थापितम् "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद"
"तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः"
इत्यादिना । एवं चिदचिदीश्वराणां स्वभावभेदं स्वरूपभेदं च
वदन्तीनां कार्यकारणभावं कार्यकारणयोरनन्यत्वं वदन्तीनां च
सर्वासां श्रुतीनामविरोधः चिदचितोः परमात्मनश्च सर्वदा
शरीरात्मभावं शरीरभूतयोः कारणदशायां नामरूपविभागान-

हि सूक्ष्मदशापन्नं कार्यदशायां च तदेव स्थूलदशापन्नं वदन्तीभिः श्रुतिभिरेव ज्ञायत इति ब्रह्माज्ञानवादस्यौपाधिकब्रह्मभेदवादस्यान्यस्याप्यपन्यायमूलस्य सकलश्रुतिविरुद्धस्य न कथंचिदप्यवकाशो दृश्यते । चिदचिदीश्वराणां पृथक्स्वभावतया तत्तच्छ्रुतिसिद्धानां शरीरात्मभावेन प्रकारप्रकारितया श्रुतिभिरेव प्रतिपन्नानां श्रुत्यन्तरैरपि कार्यकारणभावप्रतिपादनं कार्यकारणयोरैक्यप्रतिपादनं च न विरुद्धमिति सिद्धम् । यथाऽऽग्नेयादीन् षड् यागानुत्पत्तिवाक्यैः पृथगुत्पन्नान् समुदायानुवादिवाक्यद्वयेन समुदायद्वयत्वमापन्नान् "दर्शपूर्णमासाभ्याम्" इत्यधिकारवाक्यं कामिनः कर्तव्यतया विधत्ते, तथा चिदचिदीश्वरान् विविक्तस्वरूपस्वभावान् "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" "प्रधानक्षेत्रज्ञपतिर्गुणेशः" "पतिं विश्वस्यात्मेश्वरम्, आत्मा नारायणः परः" इत्यादिवाक्यैः पृथक् प्रतिपाद्य, "यस्य पृथिवी शरीरं" "यस्यात्मा शरीरं" "यस्याव्यक्तं शरीरं यस्याक्षरं शरीरम् एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिभिर्वाक्यैः चिदचितोः सर्वावस्थावस्थितयोः परमात्मशरीरत्वं परमात्मनस्तदात्मना च प्रतिपाद्य शरीरिभूतपरमात्माभिधायिभिः सद्ब्रह्मात्मादिशब्दैः कारणावस्थं कार्यावस्थं च परमात्मैकमेवेति पृथक् प्रतिपन्नं वस्तुत्रितयं "सदेव सोम्येदमग्र आसीत्" "ऐतदात्म्यमिदं सर्वं" "सर्वं खल्विदं ब्रह्म" इत्यादिवाक्यं प्रतिपादयति । चिदचिद्वस्तुशरीरिणः परमात्मनः परमात्मशब्देनाभिधाने हि नास्ति विरोधः । यथा मनुष्यपिण्डशरीरकस्यात्मविशेषस्य "अयमात्मा सुखी" इत्यात्मशब्देनाभिधानम्, इत्यलमतिविस्तरेण ॥

यत्पुनरिदमुक्तम्—ब्रह्मात्मैकत्वविज्ञानेनैवाविद्यानिवृत्तिर्युक्तेति, तदयुक्तं, बन्धस्य पारमार्थिकत्वेन ज्ञाननिवर्त्यत्वाभावात् । पुण्यापुण्यरूपकर्मनिमित्तदेवादिशरीरप्रवेशतत्प्रयुक्तसुखदुःखानुभवरूपस्य बन्धस्य मिथ्यात्वं कथमिव शक्यते वक्तुम् । एवंरूपबन्धनिवृत्तिर्भक्तिरूपापन्नोपासनप्रीतपरमपुरुषप्रसादलभ्येति पूर्वोक्तम् । भवदभिमतस्यैक्यज्ञानस्य यथावस्थितवस्तुविपरीतविषयस्य मिथ्यारूपत्वेन बन्धविवृद्धिरेव फलं भवति ।

"मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः"
इति शास्त्रात्, "उत्तमः पुरुषस्त्वन्यः"

"पृथगात्मानं प्रेरितारं च मत्वा" इति जीवात्मविजातीयस्य तदन्तर्यामिणो ब्रह्मणो ज्ञानं परमपुरुषार्थलक्षणमोक्षसाधनमित्युपदेशाच्च। अपि च भवदभिमतस्य निवर्तकज्ञानस्यापि मिथ्यारूपत्वात्तस्य निवर्तकान्तरं मृग्यम् । निवर्तकज्ञानमिदं स्वविरोधिसर्वभेदज्ञानं, विनिवर्त्य क्षणिकत्वात् स्वयमेव नश्यतीति चेत्, न । तत्स्वरूपतदुत्पत्तिविनाशानां काल्पनिकत्वेन विनाशतत्कल्पनाकल्पकरूपाविद्याया निवर्तकान्तरमन्वेषणीयम्। तद्विनाशो ब्रह्मस्वरूपमेवेति चेत्, तथा सति निवर्तकज्ञानोत्पत्तिरेव न स्यात्, तद्विनाशे तिष्ठति तदुत्पत्त्यसम्भवात्। अपि च चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयं ज्ञाता? अध्यासरूप इति चेत्, न। तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वात् कर्तृत्वानुपपत्तेः । ब्रह्मस्वरूपमेवेति चेत्, ब्रह्मणो निवर्तकज्ञानं प्रति ज्ञातृत्वं किं स्वरूपम्, उताध्यस्तम्? अध्यस्तं चेत्, अयमध्यासः तन्मूलाविद्यान्तरं च निवर्तकज्ञानाविषयतया तिष्ठत्येव । निवर्तकज्ञानान्तराभ्युपगमे तस्यापि त्रिरूपत्वात् ज्ञात्रपेक्षयाऽनवस्था स्यात् । ब्रह्मस्वरूपस्यैव ज्ञातृत्वेऽस्मदीय एव पक्षः परिगृहीतः स्यात् । निवर्तकज्ञानस्वरूपं स्वस्य ज्ञाता च ब्रह्मव्यतिरिक्तत्वेन स्वनिवर्त्यान्तर्गतमिति वचनं भूतलव्यतिरिक्तकृत्स्नं देवदत्तेन छिन्नमित्येतस्यामेव छेदनक्रियायामस्य छेत्तुरस्याश्छेदनक्रियायाश्च छेद्यानुप्रवेशवचनवदुपहास्यम् । अध्यस्तो ज्ञाता स्वनाशहेतुभूतनिवर्तकज्ञाने स्वयं कर्ता च न भवति स्वनाशस्यापुरुषार्थत्वात्, तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युपगमे भेददर्शनतन्मूलाविद्यादीनां कल्पनमेव न स्यादित्यलमनेन दिग्धहतमुद्गराभिघातेन ॥

तस्मादनादिकर्मप्रवाहरूपाज्ञानमूलत्वाद्बन्धस्य, तन्निबर्हणमुक्तलक्षणज्ञानादेव । तदुत्पत्तिश्चाहरहरनुष्ठीयमानपरमपुरुषाराधनवेषात्मयाथात्म्यबुद्धिविशेषसंस्कृतवर्णाश्रमोचितकर्मलभ्या। तत्र केवलकर्मणामल्पास्थिरफलत्वमनभिसंहितफलप-

रमपुरुषाराधनवेषाणां कर्मणामुपासनात्मकज्ञानोत्पत्तिद्वारेण ब्रह्मयाथात्म्यानुभवरूपानन्तस्थिरफलत्वं च कर्मस्वरूपज्ञानादृते न ज्ञायते। केवलाकारपरित्यागपूर्वकयथोक्तस्वरूपकर्मोपादानं च न सम्भवतीति कर्मविचारानन्तरं तत एव हेतोर्ब्रह्मविचारः कर्तव्य इति "अथातः" इत्युक्तम् ॥

तत्र पूर्वपक्षवादी मन्यते—वृद्धव्यवहारादन्यत्र शब्दस्य बोधकत्वशक्त्यवधारणासम्भवात् वृद्धव्यवहारस्य च कार्यबुद्धिपूर्वकत्वेन कार्यार्थ एव शब्दस्य प्रामाण्यमिति कार्यरूप एव वेदार्थः। अतो वेदान्ताः परिनिष्पन्ने परे ब्रह्मणि न प्रमाणभावमनुभवितुमर्हन्ति। न च पुत्रजन्मादिसिद्धवस्तुविषयवाक्येषु हर्षहेतूनां कालत्रयवर्तिनामर्थानामानन्त्यात् सुलग्नसुखप्रसवादिहर्षहेत्वर्थान्तरोपनिपातसम्भावनया च प्रियार्थप्रतिपत्तिनिमित्तमुखविकासादिलिङ्गेनार्थविशेषबुद्धिहेतुत्वनिश्चयः, नापि व्युत्पन्नेतरपदविभक्त्यर्थस्य पदान्तरार्थनिश्चयेन वा प्रकृत्यर्थनिश्चयेन वा शब्दस्य सिद्धवस्त्वभिधानशक्तिनिश्चयः, ज्ञातकार्याभिधायिपदसमुदायस्य तदंशविशेषनिश्चयरूपत्वात्तस्य। न च सर्पादिभीतस्य, नायं सर्पो रज्जुरेषेति शब्दश्रवणानन्तरं भयनिवृत्तिदर्शनेन सर्पाभावबुद्धिहेतुत्वनिश्चयः। अत्रापि निश्चेष्टं निर्विषमचेतनं वस्त्विदमित्याद्यर्थबोधेषु बहुषु भयनिवृत्तिहेतुषु सत्सु विशेषनिश्चयायोगात् कार्यबुद्धिप्रवृत्त्यौचित्येन शब्दस्य प्रवर्तकार्यावबोधित्वमवगतमिति सर्वपदानां कार्यपरत्वेन सर्वैः पदैः कार्यस्यैव विशिष्टस्य प्रतिपादनात् कार्यान्वितस्वार्थमात्रे पदशक्तिनिश्चयः। इष्टसाधनताबुद्धिस्तु कार्यबुद्धिद्वारेण प्रवृत्तिहेतुर्न तु स्वरूपेण, अतीतानागतवर्तमानेष्टोपायबुद्धिषु प्रवृत्त्यनुपलब्धेः। "इष्टोपायो हि मत्प्रयत्नादृते न सिद्ध्यति, अतो मत्कृतिसाध्य" इति बुद्धिर्यावन्न जायते तावन्न प्रवर्तते। अतः कार्यबुद्धिरेव प्रवृत्तिहेतुरिति प्रवर्तकस्यैव शब्दवाच्यतया कार्यस्यैव वेदवेद्यत्वात् परिनिष्पन्नरूपब्रह्मप्राप्तिलक्षणानन्तस्थिरफलाप्रतिपत्तेः "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिभिः कर्मणामेव स्थिरफलत्वप्रतिपादनाच्च [illegible]-

स्थिरत्वब्रह्मज्ञानफलानन्तस्थिरत्वप्रमाणहेतुको ब्रह्मविचारारम्भो न युक्त इति ॥

अत्राभिधीयते—निखिललोकविदितशब्दार्थसम्बन्धावधारणप्रकारमपनुद्य सर्वशब्दानामलौकिकैकार्थावबोधित्वावधारणं प्रामाणिका न बहु मन्यन्ते । एवं किल बालाः शब्दार्थसम्बन्धमवधारयन्ति, मातापितृप्रभृतिभिः अम्बातातमातुलादींश्च शशिचतुष्पदमृगपक्षिसर्पादींश्च "एनमवेहि" "इमं चावधारय" इत्यभिप्रायेणाङ्गुल्या निर्दिश्य तैस्तैः शब्दैस्तेषु तेष्वर्थेषु बहुशः शिक्षिताः शनैःशनैस्तैस्तैरेव शब्दैस्तेषु तेष्वर्थेषु स्वात्मन(१)ना बुद्ध्युत्पत्तिं दृष्ट्वा शब्दार्थयोः सम्बन्धान्तरादर्शनात् सङ्केतयितृपुरुषाभावाच्च तेष्वर्थेषु तेषां शब्दानां प्रयोगो बोधकत्वनिबन्धन इति निश्चिन्वन्ति । पुनश्च व्युत्पन्नेतरशब्देषु "अस्य शब्दस्यायमर्थः" इति पूर्ववृद्धैः शिक्षितास्तत्तच्छब्दानामर्थमवगम्य परप्रत्यायनाय तत्तदर्थावबोधिवाक्यजातं प्रयुञ्जते । प्रकारान्तरेणापि शब्दार्थसम्बन्धावधारणं सुशकम् । केनचित्पुरुषेण हस्तचेष्टादिना "पिता ते सुखमास्ते" इति देवदत्ताय ज्ञापयेति प्रेषितः कश्चित् तज्ज्ञापने प्रवृत्तः "पिता ते सुखमास्ते" इति शब्दं प्रयुङ्क्ते, पार्श्वस्थोऽन्यो व्युत्पित्सुर्मूकवत् चेष्टाविशेषांस्तज्ज्ञापने प्रवृत्तमिमं ज्ञात्वाऽनुगतस्तज्ज्ञापनाय प्रयुक्तं शब्दमिमं श्रुत्वाऽयं शब्दस्तदर्थबुद्धिहेतुरिति निश्चिनोतीति कार्यार्थ एव व्युत्पत्तिरिति निर्बन्धो निर्निबन्धनः । अतो वेदान्ताः परिनिष्पन्नं परं ब्रह्म तदुपासनं चापरिमितफलं बोधयन्तीति सन्निर्णयफलो ब्रह्मविचारः कर्तव्यः । कार्यार्थत्वेऽपि वेदस्य ब्रह्मविचारः कर्तव्य एव । कथम् "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "विज्ञाय प्रज्ञां कुर्वीत" "दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तः तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" तत्रापि दहरगगनविशेषः तस्मिन् यदन्तः तदुपासितव्यम्" इत्यादिभिः प्रतिपन्नोपासनविषयकार्याधिकृतफलत्वेन "ब्रह्मविदाप्नोति परम्" इत्यादिभिर्ब्रह्मप्राप्तिः श्रूयते इति । ब्रह्मस्वरूपतद्विशेषणानां तु.णासम्भिन्नदेश-

१ स्वात्मनामिति पाठान्तरम् ।

विशेषरूपस्वर्गादिवत् रात्रिसत्रप्रतिष्ठादिवत् अपगोरणशतयातनासाध्यसाधनभाववच्च कार्योपयोगितयैव सिद्धेः । गामानयेत्यादिष्वपि वाक्येषु न कार्यार्थे व्युत्पत्तिः, भवदभिमतकार्यस्य दुर्निरूपत्वात् । कृतिभावभाविकृत्युद्देश्यं हि भवतः कार्यं कृत्युद्देश्यत्वं च कृतिकर्मत्वं, कृतिकर्मत्वं च कृत्या प्राप्तुमिष्टतमत्वम्, इष्टतमं च सुखं वर्तमा(१)नदुःखनिवृत्तिर्वा । तत्रेष्टसुखाद्यर्थिना पुरुषेण स्वप्रयत्नादृते यदि तदसिद्धिः प्रतीता, तत प्रयत्नेच्छु 'प्रवर्तते पुरुष इति' न क्वचिदपीच्छाविषयस्य कृत्यधीनसिद्धित्वमन्तरेण कृत्युद्देश्यत्वं नाम किंचिदप्युपलभ्यते । इच्छाविषयस्य प्रेरकत्वं च प्रयत्नाधीनसिद्धित्वमेव, तत एव प्रवृत्तेः । न च पुरुषानुकूलत्वं कृत्युद्देश्यत्वं, यतः सुखमेव पुरुषानुकूलम् । न च दुःखनिवृत्तेः पुरुषानुकूलत्वं, पुरुषानुकूलं सुखं तत्प्रतिकूलं दुःखमिति हि सुखदुःखयोः स्वरूपविवेकः । दुःखस्य प्रतिकूलतया तन्निवृत्तिरिष्टा भवति नानुकूलतया, अनुकूलप्रतिकूलान्वयविरहेण स्वरूपेणावस्थितिर्हि दुःखनिवृत्तिः । अतः सुखव्यतिरिक्तस्य क्रियादेरनुकूलत्वं न सम्भवति । न च सुखार्थतया तस्याप्यनुकूलत्वं, दुःखात्मकत्वात्तस्य, सुखार्थतयाऽपि तदुपादानेच्छामात्रमेव भवति । न च कृतिं प्रति शेषित्वं कृत्युद्देश्यत्वं, भवत्पक्षे शेषित्वस्यानिरूपणात् । न च परोद्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं शेषत्वमिति तत्प्रतिसम्बन्धी शेषीत्यभ्युपगम्यते, तथा सति कृतेरशेषत्वेन तां प्रति तस्याभ्युपगतस्य शेषित्वाभावात् । न च परोद्देशप्रवृत्त्यर्हतायाः शेषत्वेन परः शेषी, तदुद्देश्य(२)त्वस्यैवा निरूप्यमाणत्वात्, प्रधानस्यापि भृत्योद्देशप्रवृत्त्यर्हत्वदर्शनाच्च । प्रधानस्तु भृत्यपोषेऽपि स्वोद्देशेन प्रवर्तत इति चेत् न । भृत्योऽपि हि प्रधानपोषणे स्वोद्देशेनैव प्रवर्तते । कार्यस्वरूपस्यैवानिरूपणात् । कार्यप्रतिसम्बन्धी शेषः तत्प्रतिसम्बन्धी शेषीत्यप्ययुक्तम् । नापि कृतिप्रयोजनत्वं कृत्युद्देश्यत्वं, पुरुषस्य कृत्यारम्भप्रयोजनमेव हि कृतिप्रयोजनम्, न

१ वर्तमानदुःखस्य तन्निवृत्तिर्वेति पाठान्तरम्।
२ तदुद्देश्यत्वस्यैवानिरूप्यमाणत्वादिति पाठान्तरम्।

वेच्छाविषयः । तस्मादिष्टत्वातिरेकिरूपमुद्देश्यत्वानिरूपणा कृतिसाध्यताकृतिप्रधानत्वस्वरूपका(१)र्यं दुर्निरूपमेव । नियोगस्यापि पिपासादिविषयभूत इति सुखदुःखनिवृत्तिभ्यामन्यत्वात् तत्साधनतयैवेष्टत्वम् । कृतिसाध्यत्वञ्च । अत एव हि तस्य क्रियातिरिक्तता । अन्यथा क्रियैव कार्यं स्यात् । स्वर्गकामपदसमभिव्याहारानुगुण्येन लिङादिवाच्यं कार्यं स्वर्गसाधनमेवेति क्षणभङ्गिकर्मातिरेकि स्थिरं स्वर्गसाधनमपूर्वमेव कार्यमिति स्वर्गसाधनतोल्लेखेनैव अपूर्वव्युत्पत्तिः । अतः प्रथममनन्यार्थतया प्रतिपन्नस्य कार्यस्यानन्यार्थत्वनिर्वहणायापूर्वमेव पश्चात् स्वर्गसाधनत्वप्रतीत्युपहास्यम् । स्वर्गकामपदान्वितकार्याभिधायिपदेन प्रथममप्यनन्यार्थताभिधानात्, सुखदुःखनिवृत्तितत्साधनेभ्योऽन्यस्यानन्यार्थस्य(२)कृतिसाध्यताप्रतीत्यनुपपत्तेश्च । अपि च किमिदं नियोगस्य प्रयोजनत्वम् ? सुखवत् नियोगस्याप्यनुकूलत्वमेवेति चेत्, किं नियोगः सुखं, सुखमेव ह्यनुकूलम् । सुखविशेषवत् नियोगापरपर्यायं विलक्षणं सुखान्तरमिति चेत्, किन्तत्र प्रमाणमिति वक्तव्यम् । स्वानुभवश्चेत्, न, विषयविशेषानुभवसुखवत् "नियोगानुभवसुखमिदम्" इति भवताऽपि नानुभूयते । शास्त्रेण नियोगस्य सुखपर्यायतया प्रतिपादनात् पश्चात्तु भोक्ष्यत इति चेत् । किन्तत् नियोगस्य सुखपर्यायत्वबोधि शास्त्रम् । न तावल्लौकिकं वाक्यं, तस्य दुःखात्मकक्रियाविषयत्वात् । तेन सुखादिसाधनतयैव कृतिसाध्यतामात्रप्रतिपादनात् । नापि वैदिकं, तेनापि स्वर्गादिसाधनतयैव कार्यस्य प्रतिपादनात् । नापि नित्यनैमित्तिकशास्त्रं, तस्यापि तदभिधायित्वे स्वर्गकामवाक्यस्यापूर्वव्युत्पत्तिपूर्वकमित्युक्तरीत्या तेनापि सुखादिसाधनभूतकार्याभिधानमवर्जनीयम् । नियतैहिकफलस्य कर्मणोऽनुष्ठितस्य फलत्वेन तदानीमनुभूयमानान्नाद्यरोगतादिव्यतिरेकेण नियोगरूपसुखानुभवानुपलब्धेश्च । नियोगः सुखमित्यत्र न किञ्चन प्रमाणमुपलभामहे । अर्थवादादिष्वपि

१ कार्यत्वमिति पाठान्तरम् ।

२ कार्यस्येति पुस्तकान्तरेऽधिकः पाठः ।

स्वर्गादिसुखप्रकारकीर्तनवत् नियोगरूपसुखप्रकारकीर्तनं भवतामपि न दृष्टचरम्। अतो विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धमेव लिङादेर्वाच्यमित्यवसीयते। धात्वर्थस्य च यागादेरिन्द्रादिदेवताराधनरूपता तदाराधितात्परमपुरुषात्फलसिद्धिश्चेति "फलमत उपपत्तेः" इत्यत्र प्रतिपादयिष्यते॥

अतो वेदान्ताः परिनिष्पन्नं परं ब्रह्म बोधयन्तीति ब्रह्मोपासनफलानन्त्यं स्थिरत्वं च सिद्धम्। चातुर्मास्यादिकर्मस्वपि केवलस्य कर्मणः क्षयिफलत्वोपदेशादक्षयफलश्रवणं "वायुश्चान्तरिक्षं चैतदमृतम्" इत्यादिवत् आपेक्षिकं मन्तव्यम्। अतः केवलानां कर्मणामल्पास्थिरफलत्वात् ब्रह्मज्ञानस्य चानन्तस्थिरफलत्वात् तन्निर्णयफलो ब्रह्मविचारारम्भो युक्त इति स्थितम्॥

किम्पुनस्तद् ब्रह्म यज्जिज्ञास्यमुच्यत इत्यत्राह—

जन्माद्यधिकरणम्। जन्माद्यस्य यतः॥ २॥

"जन्मादि" इति सृष्टिस्थितिप्रलयम्। तद्गुणसंविज्ञानो बहुव्रीहिः। "अस्य" अचिन्त्यविविधविचित्ररचनस्य नियतदेशकालफलभोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य जगतः। "यत" यस्मात्सर्वेश्वरान्निखिलहेयप्रत्यनीकस्वरूपात्सत्यसङ्कल्पात् ज्ञानानन्दाद्यनन्तकल्याणगुणात्सर्वज्ञात्सर्वशक्तेः परमकारुणिकात्परस्मात्पुंसः सृष्टिस्थितिप्रलयाः प्रवर्तन्ते तद् ब्रह्मेति सूत्रार्थः।

"भृगुर्वै वारुणिः वरुण पितरमुपससार, अधीहि भगवो ब्रह्म" इत्यारभ्य "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्म" इति श्रूयते। तत्र संशयः - किमस्माद्वाक्याद् ब्रह्म लक्षणतः प्रतिपत्तुं शक्यते न वेति। किम्प्राप्तम्। न शक्यमिति। न तावत् जन्मादयो विशेषणत्वेन ब्रह्म लक्षयन्ति। अनेकविशेषणव्यावृत्तत्वेन ब्रह्मणोऽनेकत्वप्रसक्तेः। विशेषणत्वं हि व्यावर्तकत्वम्। ननु देवदत्तः श्यामो युवा लोहिताक्षः समपरिमाण इत्यत्र विशेषणबहुत्वेऽप्येक एव देवदत्तः प्रतीयते एवमत्रापि—

मेव ब्रह्म भवति । नैवम्, तत्र प्रमाणान्तरेणैक्यप्रतीतेरेकस्मिन्नेव विशेषणानामुपसंहारः । अन्यथा तत्रापि व्यावर्त्तकत्वादनेकत्वमपरिहार्य्यम् । अत्र त्वनेनैव विशेषणेन लिलक्षयिषितत्वाद् ब्रह्मणः प्रमाणान्तरेणैक्यमनवगतमिति व्यावर्त्तकभेदेन ब्रह्मबहुत्वमवर्जनीयम् । ब्रह्मशब्दैक्यादत्राप्यैक्यं प्रतीयत इति चेत्, न । अज्ञातगोव्यक्तिजिज्ञासोः पुरुषस्य खण्डो मुण्डः पूर्णशृङ्गो गौरित्युक्ते गोपदैक्येऽपि, खण्डत्वादिव्यावर्त्तकभेदेन गोव्यक्तिबहुत्वप्रतीतेर्ब्रह्मव्यक्तयोऽपि बहवः स्युः । अत एव लिलक्षयिषिते वस्तुन्येषां विशेषणानां सम्भूय लक्षणत्वमप्यनुपपन्नम् । नाप्युपलक्षणत्वेन लक्षयन्ति, आकारान्तराप्रतिपत्तेः । उपलक्षणानामेकेनाकारेण प्रतिपन्नस्य केनचिदाकारान्तरेण प्रतिपत्तिहेतुत्वं हि दृष्टं, य(१)त्रायं सारसः स देवदत्तकेदार इत्यादिषु । ननु च "सत्यं ज्ञानमनन्तं ब्रह्म" इति प्रतिपन्नाकारस्य जगज्जन्मादीन्युपलक्षणानि भवन्ति । न, इतरेतरप्रतिपन्नाकारापेक्षत्वेनोभयोर्लक्षणवाक्ययोरन्योन्याश्रयणात् । अतो न लक्षणतो ब्रह्म प्रतिपत्तुं शक्यत इति ॥

एवं प्राप्तेऽभिधीयते । जगत्सृष्टिस्थितिप्रलयैरुपलक्षणभूतैर्ब्रह्म प्रतिपत्तुं शक्यते । न चोपलक्षणोपलक्ष्याकारव्यतिरिक्ताकारान्तराप्रतिपत्तेर्ब्रह्मणोऽप्रतिपत्तिः । उपलक्ष्यं ह्यनवधिकातिशयबृहत् बृंहणं च ब्रह्म । बृंहतेर्धातोस्तदर्थत्वात् । तदुपलक्षणभूताश्च जगज्जन्मस्थितिलयाः । "यतो" "येन" "यत्" इति प्रसिद्धवत् जन्मादिकारणनिर्देशेन यथाप्रसिद्धि जन्मादिकारणमनूद्यते । प्रसिद्धिश्च "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्येकस्यैव सच्छब्दवाच्यस्य निमित्तोपादानरूपकारणत्वेन । तदपि "सदेवेदमग्र एकमेवासीत्" इत्युपादानतां प्रतिपाद्य "अद्वितीयम्" इत्यधिष्ठात्रन्तरं प्रतिषिध्य "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्येकस्यैव प्रतिपादनात् । तस्मात् यन्मूला जगज्जन्मस्थितिलयाः तद् ब्रह्मेति जन्मस्थितिलयाः स्वनिमित्तोपादानभूतं वस्तु ब्रह्मेति लक्षयन्ति । जगन्निमित्तोपादानताक्षिप्तसर्वज्ञत्वसत्यसङ्कल्पत्वविचित्रशक्ति-

१ यथा यत्रायमिति पाठान्तरम्।

स्याद्याकारलक्षणत्वेन प्रतिपन्नं ब्रह्मेति च जन्मादीनां तथाप्रतिपन्न-
स्य लक्षणत्वेन नाकारान्तराप्रतिपत्तिरूपाऽनुपपत्तिः। जग-
ज्जन्मादीनां विशेषणतया लक्षणत्वेऽपि न कश्चिद्दोषः। लक्ष-
णभूतान्यपि विशेषणानि स्वविरोधिव्यावृत्तं ब्र(१)ह्म लक्षयन्ति।
अज्ञातस्वरूपे वस्तुन्येकस्मिंल्लिलक्षयिषितेऽपि परस्पराविरो-
ध्यनेकविशेषणलक्षणत्वं न भेदमापादयति, विशेषणानामेका-
श्रयतया प्रतीतेरेकस्मिन्नेवोपसंहारात्। खण्डत्वादयस्तु विरो-
धादेव गोव्यक्तिभेदमापादयन्ति। अत्र तु कालभेदेन जन्मा-
दीनां न विरोधः। "यतो वा इमानि भूतानि" इत्यादिकारण-
वाक्येन प्रतिपन्नस्य जगज्जन्मादिकारणस्य ब्रह्मणः सकलेतरव्या-
वृत्तं स्वरूपमभिधीयते "सत्यं ज्ञानमनन्तं ब्रह्म" इति। तत्र
सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माह। तेन विकारास्पदम-
चेतनं तत्संसृष्टश्चेतनोऽपि व्यावृत्तः। नामान्तरभजनार्हाव-
स्थान्तरयोगेन तयोर्निरुपाधिकसत्तायोगरहितत्वात्। ज्ञान-
पदं नित्यासंकुचितज्ञानैकाकारमाह। तेन कदाचित्संकुचितज्ञा-
नत्वेन मुक्ता व्यावृत्ताः। अनन्तपदं देशकालवस्तुपरिच्छेद
रहितस्वरूपमाह। सगुणत्वात्स्वरूपस्य स्वरूपेण स्वगुणैश्चान-
न्त्यम्। तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशय-
स्वरूपस्वगुणा नित्या व्यावृत्ताः, विशेषणानां व्यावर्तकत्वात्।
ततः "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यनेन वाक्येन जगज्जन्मा
दिनाऽवगतस्वरूपं ब्रह्म सकलेतरवस्तुविजातीयमिति ल-
क्ष्यत इति नान्योन्याश्रयणम्। अतः सकलजगज्जन्मादिकारणं
निरवद्यं सर्वज्ञं सत्यसंकल्पं सर्वशक्ति ब्रह्म लक्षणतः प्रति-
पत्तुं शक्यत इति सिद्धम्॥

ये तु निर्विशेषं वस्तु जिज्ञास्यमिति वदन्ति, तन्मते
"ब्रह्मजिज्ञासा" "जन्माद्यस्य यतः" इत्यसङ्गतं स्यात्, "नि-
रतिशयबृहद् बृंहणं च ब्रह्म" इति निर्वचनात्, तच्च ब्रह्म
जगज्जन्मादिकारणमिति वचनाच्च। एवमुत्तरेष्वपि सूत्रगणेषु
सूत्रोदाहृतश्रुतिगणेषु चेक्षणाद्यन्वयदर्शनात् सूत्राणि सूत्रोदा-
हृताः श्रुतयश्च न तत्र(२) प्रमाणम्। तर्कश्च साध्यधर्माव्यभि-

१ वस्तु लक्षयन्तीति पाठान्तरम्।
२ तत्प्रमाणमिति पाठान्तरम्।

चारिसाधनधर्मोज्झितवस्तुविषयत्वात् निर्विशेषवस्तुनि प्रमाणम् । जगज्जन्मादिभ्रमो यतः तद् ब्रह्मेति स्वोत्प्रेक्षापक्षेऽपि न निर्विशेषवस्तुसिद्धिः । भ्रममूलमज्ञानम्, अज्ञानसाक्षि ब्रह्मेत्यभ्युपगमात् । साक्षित्वं हि प्रकाशैकरसतयैवोच्यते । प्रकाशत्वन्तु जडाद् व्यावर्त्तकं स्वस्य च परस्य च व्यवहारयोग्यतापादनस्वभावेन भवति । तथा सति सविशेषत्व, तदभावे प्रकाशतैव न स्यात्, तुच्छतैव स्यात् ।

जगज्जन्मादिकारणं ब्रह्म वेदान्तवेद्यमित्युक्तम्, तदयुक्तम् । तद्धि न वाक्यप्रतिपाद्यम्, अनुमानेन सिद्धेरित्याशङ्क्याह—

शास्त्रयोनित्वाधिकरणम् । **शास्त्रयोनित्वात् ॥ ३ ॥**

“शास्त्रम्” यस्य “योनिः” कारणं=प्रमाणं तच्छास्त्रयोनि, तस्य भावः शास्त्रयोनित्वं तस्मात् ब्रह्मज्ञानकारणत्वात्, शास्त्रस्य तद्योनित्वम् । ब्रह्मणोऽत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषयतया ब्रह्मणः शास्त्रैकप्रमाणकत्वादुक्तस्वरूपं ब्रह्म “यतो वा इमानि भूतानि जायन्ते” इत्यादि वाक्यं बोधयत्येवेत्यर्थः ॥

ननु शास्त्रयोनित्वं ब्रह्मणो न सम्भवति प्रमाणान्तरवेद्यत्वाद् ब्रह्मणः । “अप्राप्ते हि शास्त्रमर्थवत्” । किं तर्हि तत्र प्रमाणम् । न तावत्प्रत्यक्षम् । तद्धि द्विविधम्—इन्द्रियसम्भव योगसम्भवं चेति । इन्द्रियसम्भवं च बाह्यसम्भवमान्तरसम्भवं चेति द्विविधम् । बाह्येन्द्रियाणि विद्यमानसन्निकर्षयोग्यवस्तुविषयबोधजननानीति न सर्वार्थसाक्षात्कारतन्निर्माणसमर्थपरमपुरुषविशेषविषयबोधजनकानि । नाप्यान्तरम्, आन्तरसुखदुःखादिव्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रियानपेक्षप्रवृत्त्यनुपपत्तेः । नापि योगजन्यं, भावनाप्रकर्षपर्यन्तजन्मनस्तस्य विशदावभासत्वेऽपि पूर्वानुभूतविषयस्मृतिमात्रत्वात न प्रामाण्यमिति कुतः प्रत्यक्षता, तदतिरिक्तविषयत्वे कारणाभावात्, तथा सति तस्य भ्रमरूपता । नाप्यनुमानं विशेषतो दृष्टं सामान्यतो दृष्टं वा । अतीन्द्रिये वस्तुनि सम्बन्धावधारणविरहान्न विशेषतो दृष्टं, समस्तवस्तुसाधा-

त्याद्याकारस्वरूपत्वेन प्रतिपन्नं ब्रह्मेति च जन्मादीनां तथाप्रतिपन्नस्य लक्षणत्वेन नाकारान्तराप्रतिपत्तिरूपाऽनुपपत्तिः । जगज्जन्मादीनां विशेषणतया लक्षणत्वेऽपि न कश्चिद्दोषः । लक्षणभूतान्यपि विशेषणानि स्वविरोधिव्यावृत्तं ब्र(१)ह्म लक्षयन्ति । अज्ञातस्वरूपे वस्तुन्येकस्मिंल्लक्षयितव्येऽपि परस्पराविरोध्यनेकविशेषणलक्ष्यत्वं न भेदमापादयति, विशेषणानामेकाश्रयतया प्रतीतेरेकस्मिन्नेवोपसंहारात् । खण्डत्वादयस्तु विरोधादेव गोव्यक्तिभेदमापादयन्ति । अत्र तु कालभेदेन जन्मादीनां न विरोधः । "यतो वा इमानि भूतानि" इत्यादिकारणवाक्येन प्रतिपन्नस्य जगज्जन्मादिकारणस्य ब्रह्मणः सकलेतरव्यावृत्तं स्वरूपमभिधीयते "सत्यं ज्ञानमनन्तं ब्रह्म" इति । तत्र सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माह । तेन विकारास्पदमचेतनं तत्संसृष्टश्चेतनोऽपि व्यावृत्तः । नामान्तरभजनार्हावस्थान्तरयोगेन तयोर्निरुपाधिकसत्तायोगरहितत्वात् । ज्ञानपदं नित्यासंकुचितज्ञानैकाकारमाह । तेन कदाचित्सङ्कुचितज्ञानत्वेन मुक्ता व्यावृत्ताः । अनन्तपदं देशकालवस्तुपरिच्छेदरहितस्वरूपमाह । सगुणत्वात्स्वरूपस्य स्वरूपेण स्वगुणैश्चानन्त्यम् । तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपस्वगुणा नित्या व्यावृत्ताः, विशेषणानां व्यावर्तकत्वात् । ततः "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यनेन वाक्येन जगज्जन्मादिनाऽवगतस्वरूपं ब्रह्म सकलेतरवस्तुविसजातीयमिति लक्ष्यत इति नान्योन्याश्रयणम् । अतः सकलजगज्जन्मादिकारणं निरवद्यं सर्वज्ञं सत्यसङ्कल्पं सर्वशक्ति ब्रह्म लक्षणतः प्रतिपत्तुं शक्यत इति सिद्धम् ॥

ये तु निर्विशेषं वस्तु जिज्ञास्यमिति वदन्ति, तन्मते "ब्रह्मजिज्ञासा" "जन्माद्यस्य यतः" इत्यसङ्गतं स्यात्, "निरतिशयबृहद् बृंहणं च ब्रह्म" इति निर्वचनात्, तच्च ब्रह्म जगज्जन्मादिकारणमिति वचनाच्च । एवमुत्तरेष्वपि सूत्रगणेषु सूत्रोदाहृतश्रुतिगणेषु चेक्षणाद्यन्वयदर्शनात् सूत्राणि सूत्रोदाहृताः श्रुतयश्च न तत्र(२) प्रमाणम् । तर्कश्च साध्यधर्माव्यभि-

१ वस्तु लक्षयन्तीति पाठान्तरम् ।

२ तत्प्रमाणमिति पाठान्तरम् ।

चारित्राद्यनधर्माश्रितवस्तुविषयत्वान्न निर्विशेषवस्तुनि प्रमाणम्। जगज्जन्मादिभ्रमो यतः तद् ब्रह्मेति स्वोत्प्रेक्षापक्षेऽपि न निर्विशेषवस्तुसिद्धिः। भ्रममूलमज्ञानम्, अज्ञानसाक्षि ब्रह्मेत्यभ्युपगमात्। साक्षित्वं हि प्रकाशैकरसतयैवोच्यते। प्रकाशत्वन्तु जडाद् व्यावर्त्तकं स्वस्य च परस्य च व्यवहारयोग्यतापादनस्वभावेन भवति। तथा सति सविशेषत्वं, तदभावे प्रकाशतैव न स्यात्, तुच्छतैव स्यात्।

जगज्जन्मादिकारणं ब्रह्म वेदान्तवेद्यमित्युक्तम्, तदयुक्तम्। तद्धि न वाक्यप्रतिपाद्यम्, अनुमानेन सिद्धेरित्याशङ्क्याह—

शास्त्रयोनित्वाधिकरणम्। **शास्त्रयोनित्वात् ॥ ३ ॥**

"शास्त्रम्" यस्य "योनिः" कारणं=प्रमाणं तच्छास्त्रयोनि, तस्य भावः शास्त्रयोनित्वं तस्मात् ब्रह्मज्ञानकारणत्वात्, शास्त्रस्य तद्योनित्वम्। ब्रह्मणोऽत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषयतया ब्रह्मणः शास्त्रैकप्रमाणकत्वादुक्तस्वरूपं ब्रह्म "यतो वा इमानि भूतानि जायन्ते" इत्यादि वाक्यं बोधयत्येवेत्यर्थः ॥

ननु शास्त्रयोनित्वं ब्रह्मणो न सम्भवति प्रमाणान्तरवेद्यत्वाद् ब्रह्मणः। "अप्राप्ते हि शास्त्रमर्थवत्"। किं तर्हि तत्र प्रमाणम्। न तावत्प्रत्यक्षम्। तद्धि द्विविधम्—इन्द्रियसम्भवं योगसम्भवं चेति। इन्द्रियसम्भवं च बाह्यसम्भवमान्तरसम्भवं चेति द्विविधम्। बाह्येन्द्रियाणि विद्यमानसन्निकर्षयोग्यस्वविषयबोधजनकानीति न सर्वार्थसाक्षात्कारतन्निर्माणसमर्थपरमपुरुषविशेषविषयबोधजनकानि। नाप्यान्तरम्, आन्तरसुखदुःखादिव्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रियानपेक्षप्रवृत्त्यनुपपत्तेः। नापि योगजन्यं, भावनाप्रकर्षपर्यन्तजन्मनस्तस्य विशदावभासत्वेऽपि पूर्वानुभूतविषयस्मृतिमात्रत्वात् न प्रामाण्यमिति कुतः प्रत्यक्षता, तदतिरिक्तविषयत्वे कारणाभावात्, तथा सति तस्य भ्रमरूपता। नाप्यनुमानं विशेषतो दृष्टं सामान्यतो दृष्टं वा। अतीन्द्रिये वस्तुनि सम्बन्धावधारणविरहान्न विशेषतो दृष्टं, समस्तवस्तुसाक्षा-

त्कारणतन्निर्माणसमर्थपुरुषविशेषनियतं सामान्यतो दृष्टमपि न लिङ्गमुपलभ्यते । ननु च जगतः कार्यत्वं तदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञकर्तृकत्वव्याप्तम्, अचेतनारब्धत्वं जगतश्चैकचेतनाधीनत्वेन व्याप्तम् । एवं हि घटादिकार्यं तदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञकर्तृकं दृष्टम्, अचेतनारब्धनीरोगस्वशरीरमेकचेतनाधीनं च । सावयवत्वेन जगतः कार्यत्वम् । उच्यते, किमिदमेकचेतनाधीनत्वम् । न तावत् तदायत्तोत्पत्तिस्थितित्वं, दृष्टान्तो हि साध्यविकलः स्यात् । न ह्यरोगाणां स्वशरीरमेकचेतनायत्तोत्पत्तिस्थिति, तच्छरीरस्य भोक्तृभार्यादिसर्वचेतनानामदृष्टजन्यत्वात्तदुत्पत्तिस्थित्योः । किञ्च शरीरावयविन· [illegible] स्थिति-

[illegible] तु

[illegible] ति

[illegible]पृथगनुगतामेकरूपां स्थितिञ्चोपलभामहे । तदायत्तप्रवृत्तित्वं तदधीनत्वमिति चेत्, अनेकचेतनसाध्येषु गुरुतररथशिलामहीरुहादिषु व्यभिचारः । चेतनमात्राधीनत्वे सिद्धसाध्यता । किंच उभयवादिसिद्धानां जीवानामेव लाघवन्यायेन कर्तृत्वाभ्युपगमो युक्तः । न च जीवानामुपादानाद्यनभिज्ञतया कर्तृत्वासम्भवः, सर्वेषामेव चेतनानां पृथिव्याद्युपादानयागाद्युपकरणसाक्षात्कारसामर्थ्यात् । यद्यपीदानीं पृथिव्यादयो या-

[illegible]

[illegible]

नतत्साक्षात्कार एव हि कार्यारम्भोपयोगी । शक्तेस्तु ज्ञानमात्रमेवोपयुज्यते न साक्षात्कारः । न हि कुलालादयः कार्योपकरणभूतदण्डचक्रादिवत् तच्छक्तिमपि साक्षात्कृत्य घटमणिकादिकार्यमारभन्ते । इह तु चेतनानामागमावगतयागादिशक्तिविशेषाणां कार्यारम्भो नानुपपन्नः । किंच यत् शक्यक्रियं शक्योपादानादिविज्ञानं च तदेव हि तदभिज्ञकर्तृकं दृष्टम् । महीमहीधरमहार्णवादि त्वशक्यक्रियमशक्योपादानादिविज्ञानं चेति न चेतनकर्तृकम् । अतो घटमणिकादिसजातीयशक्यक्रियशक्योपादानादिविज्ञानवस्तुगतमेव कार्यत्वं बुद्धिमत्कर्तृपूर्वक

स्वसाधने प्रभवति । किंच घटादिकार्य्यमनीश्वरेणाल्पज्ञानशक्तिना सशरीरेण परिग्रहवताऽनाप्तकामेन निर्मितं दृष्टमिति तथाविधमेव चेतनं कर्त्तारं साधयन् अयं कार्य्यत्वहेतुः सिषाधयिषितपुरुषार्थसर्वज्ञत्वादिविपरीतसाधनात् विरुद्धः स्यात् । न चैतावता सर्वानुमानोच्छेदप्रसङ्ग, लिङ्गिनि प्रमाणान्तरगोचरे लिङ्गबलोपस्थापिता विपरीतविशेषाः तत्प्रमाणप्रतिहतगतयो हि निवर्त्तन्ते, इह तु सकलेतरप्रमाणाविषये लिङ्गिनि निखिलजगन्निर्माणचतुरेऽन्वयव्यतिरेकावगताविनाभावनियमा धर्माः सर्वे एवाविशेषेण प्रसज्यन्ते निवर्त्तकप्रमाणाभावात् तथैवावतिष्ठन्ते । अत आगमादृते कथमीश्वरस्सेत्स्यति ॥

अत्राहुः—सावयवत्वादेव जगतः कार्य्यत्वं न प्रत्याख्यातुं शक्यते । भवन्ति च प्रयोगाः विवादाध्यासितं भूभूधरादि कार्य्यं सावयवत्वात् घटादिवत्, तथा विवादाध्यासितम् अवनिजलधिमहीधरादि कार्य्यं महत्त्वे सति क्रियावत्त्वात् घटादिवत्, तनुभुवनादि कार्य्यं महत्त्वे सति मूर्त्तत्वात् घटादिवत् । सावयवेषु द्रव्येष्विदमेव क्रियते नेतरदिति कार्य्यत्वस्य नियामकं सावयवत्वातिरेकि रूपान्तरं नोपलभामहे । कार्य्यत्वप्रतिनियतं शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वञ्चोपलम्भ्यत इति चेत्, न, कार्य्यत्वेनानुमितेऽपि विषये ज्ञानशक्ती कार्य्यानुमेये इत्यन्यत्रापि सावयवत्वादिना कार्य्यत्वे ज्ञातमिति तेन च प्रतिपन्ने एवेति न कश्चिद्विशेषः । तथा हि—पटप्रासादादिषु कृतेषु कार्य्यत्वदर्शनानुमितकर्तृकतत्सन्निर्माणशक्तिज्ञानः पुरुषोऽदृष्टपूर्वं विचित्रसन्निवेशं नरेन्द्रभवनमालोक्यावयवसन्निवेशविशेषेण तस्य कार्य्यत्वं निश्चित्य तदानीमेव कर्त्तुस्तज्ज्ञानशक्तिवैचित्र्यमनुमिनोति । अतस्तनुभुवनादेः कार्य्यत्वे सिद्धे सर्वसाक्षात्कारतन्निर्माणादिनिपुणः कश्चित्पुरुषविशेषः सिद्ध्यत्येव । किञ्च सर्वचेतनानां धर्माधर्मनिमित्तेऽपि सुखदुःखोपभोगे चेतनानधिष्ठितयोरचेतनयोस्तयोः फलहेतुत्वानुपपत्तेः सर्वकर्मानुगुणसर्वफलप्रदानचतुरः कश्चिदास्थेयः, वर्धकिनाऽनधिष्ठितस्य वास्यादेरचेतनस्य देशकालाद्यनेकपरिकरसन्निधानेऽपि यूपादिनिर्माणसाधनत्वादर्शनात् । बीजाङ्कुरादे

पक्षान्तर्भावेण तैव्यभिचारापादनं श्रोत्रियवेतालानामनभिज्ञताविजृम्भितम् । तत एव तुलादिभिर्व्यभिचारद(१)र्शनवचनमपि तथैव । न च लाघवेनोभयवादिसम्प्रतिपन्नक्षेत्रज्ञानामेवेदृशमधिष्ठातृत्वकल्पनं युक्तं, तेषां सूक्ष्मव्यवहितविप्रकृष्टदर्शनाशक्तिनिश्चयात्, दर्शनानुगुणैव हि सर्वत्र शक्तिकल्पना । न च क्षेत्रज्ञवदीश्वरस्याशक्तिनिश्चयोऽस्ति । अतः प्रमाणान्तरतो न तत्सिद्ध्यनुपपत्तिः, समर्थकर्तृपूर्वकत्वहेतुना सिध्यन् स्वाभाविकसर्वार्थसाक्षात्कारतन्नियमनशक्तिसम्पन्न एव सिद्ध्यति । यत्त्वनैश्वर्य्यापादनेन धर्मविशेषविपरीतसाधनत्वमुक्तं, तदनुमानवृत्तानभिज्ञत्वनिबन्धनं, सपक्षे दृष्टानां सर्वेषां कार्य्यस्याहेतुभूतानां च धर्माणां, लिङ्गिन्यप्राप्तेः । एतदुक्तं भवति—केनचित्किञ्चित्क्रियमाणं स्वोत्पत्तये कर्तुः स्वनिर्माणसामर्थ्यं स्वोपादानोपकरणज्ञानं चापेक्षते, न त्वन्यसामर्थ्यमन्यज्ञानं च, हेतुत्वाभावात्, स्वनिर्माणसामर्थ्यस्वोपादानोपकरणज्ञानाभ्यामेव स्वोत्पत्तावुपपन्नायां सम्बन्धितया दर्शनमात्रेणाकिञ्चित्करस्यार्थान्तराज्ञानादेर्हेतुत्वकल्पनाऽयोगादिति । किन्तु क्रियमाणवस्तुव्यतिरिक्तार्थज्ञानादिकं किं सर्वविषयं क्रियोपयोगि, उत कतिपयविषयम् । न तावत् सर्वविषयं, न हि कुलालादिः क्रियमाणव्यतिरिक्तं किमपि न विजानाति । नापि कतिपयविषयम्, सर्वेषु कर्तृषु तत्तद्ज्ञानाशक्त्यनियमेन सर्वेषामज्ञानादीनां व्यभिचारात् । अतः कार्य्यत्वस्यासाधकानामनीश्वरत्वादीनां लिङ्गिन्यप्राप्तेरिति न विपरीतसाधनत्वम् । कुलालादीनां दण्डचक्राद्यधिष्ठानं शरीरद्वारेणैव दृष्टमिति जगदुपादानोपकरणाधिष्ठानमीश्वरस्याशरीरस्यानुपपन्नमिति चेत्, न, सङ्कल्पमात्रेणैव परशरीरगतभूतवेतालगरलाद्यपगमविनाशदर्शनात् । कथमशरीरस्यैश्वरस्य परप्रवर्तनरूपस्सङ्कल्प इति चेत् । न शरीरापेक्षस्सङ्कल्पः, शरीरस्य सङ्कल्पहेतुत्वाभावात् । मन एव हि सङ्कल्पहेतुः, तदभ्युपगतमीश्वरेऽपि, कार्य्यत्वेनैव ज्ञानशक्तिवत् मनसोऽपि प्राप्तत्वात् । नामतः सङ्कल्पः सशरीर-

(१) व्यभिचारवचनमपीति पाठान्तरम् ।

स्येव समनस्कत्वादिति चेत्, न, मनसो नित्यत्वेन देहापगमेऽपि मन-स्सद्भावेनानैकान्तिकत्वात्। अतो विचित्रावयवसन्निवेशविशिष्टतनुभुवनादिकार्य्यनिर्माणे पुण्यपापपरवशः परिमितशक्तिज्ञानः क्षेत्रज्ञो न प्रभवतीति निखिलभुवननिर्माणचतुरोऽचिन्त्यापरिमितज्ञानशक्त्यैश्वर्योऽशरीरः सङ्कल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्चः पुरुषविशेष ईश्वरोऽनुमानेनैव सिद्ध्यति । अतः प्रमाणान्तरावसेयत्वाद् ब्रह्मणो नैतच्छास्त्रं ब्रह्म प्रतिपादयति। किञ्च, अत्यन्तभिन्नयोरेव मृद्द्रव्यकुलालयोर्निमित्तोपादानत्वदर्शनेन आकाशादेर्निरवयवद्रव्यस्य कार्यत्वानुपपत्त्या च नैकमेव ब्रह्म कृत्स्नस्य जगतो निमित्तमुपादानं च प्रतिपादयितुं शक्नोतीति ॥

एवं प्राप्ते ब्रूमः, यथोक्तलक्षणं ब्रह्म जन्मादिवाक्यं बोधयत्येव । कुतः। शास्त्रैकप्रमाणकत्वाद् ब्रह्मणः। यदुक्तम्, सावयवत्वादिना कार्य्यं सर्वं जगत्, कार्य्यं च तदुचितकर्तृविशेषपूर्वकं दृष्टमिति निखिलजगन्निर्माणतदुपादानोपकरणवेदनचतुरः कश्चिदनुमेय इति, तदयुक्तम्, महीमहार्णवादीनां कार्य्यत्वेऽपि एकदैकेन निर्मिता इत्यत्र प्रमाणाभावात्। न चैकस्य घटस्येव सर्वेषामेक कार्य्यत्वम्, येनैकदैकः कर्ता स्यात्, पृथग्भूतेषु कार्येषु कालभेदकर्तृभेददर्शनेन कर्तृकालैक्यनियमाभावा[1]त्। न च क्षेत्रज्ञानां विचित्रजगन्निर्माणाशक्त्या कार्य्यत्वबलेन तदतिरिक्तकल्पनायामनेककल्पनाऽनुपपत्तेश्चैक एव कर्ता भवितुमर्हति, क्षेत्रज्ञानामेवोपचितपुण्यविशेषाणां शक्तिवैचित्र्यदर्शनेन तेषामेवातिशयितादृष्टसम्भावनया च तत्तद्विलक्षणकार्य्यहेतुत्वसम्भवात्, तदतिरिक्तात्यन्तादृष्टपुरुषकल्पनाऽनुपपत्तेश्च । न च युगपत् सर्वोच्छित्तिः सर्वोत्पत्तिश्च प्रमाणपदवीमधिरोहतः, अदर्शनात्, क्रमेणैवोत्पत्तिविनाशदर्शनाच्च, कार्य्यत्वेन सर्वोत्पत्तिविनाशयोः कल्प्यमानयोर्दर्शनानुगुण्येन कल्पनायामपि विरोधाभावाच्च । अतो बुद्धिमदेककर्तृकत्वे साध्ये कार्य्यत्वस्यानैकान्त्य पक्षस्याप्र

१ नियमादर्शनादिति पाठान्तरम् ।

सिद्धविशेषणत्वं साध्यविकलता च दृष्टान्तस्य, सर्वनिर्माणचतुरस्यैकस्याप्रसिद्धेः बुद्धिमत्कर्तृकत्वमात्रे साध्ये सिद्धसाधनता। सार्वज्ञ्यसर्वशक्तियुक्तस्य कस्यचिदेकस्य साधकमिदं कार्यत्वं किं युगपदुत्पद्यमानसर्ववस्तुगतम्, उत क्रमेणोत्पद्यमानसर्ववस्तुगतम्। युगपदुत्पद्यमानसर्ववस्तुगतत्वे कार्यत्वस्यासिद्धता, क्रमेणोत्पद्यमानसर्ववस्तुगतत्वेऽनेककर्तृकत्वसाधनाद्विरुद्धता। एकस्यैककर्तृकत्वसाधने प्रत्यक्षानुमानविरोधः शास्त्रविरोधश्च, 'कुम्भकारो जायते' 'रथकारो जायते' इत्यादिश्रवणात्। अपि च सर्वेषां कार्याणां शरीरादीनां सत्त्वादिगुणकार्यसुखदुःखाद्यन्वयदर्शनेन सत्त्वादिमूलत्वमवश्याश्रयणीयम्। कार्यवैचित्र्यहेतुभूताः कारणगता विशेषाः सत्त्वादयः, तेषां कार्याणां तन्मूलत्वापादनं तद्युक्तपुरुषान्तःकरणविकारद्वारेण, पुरुषस्य च तद्योगः कर्ममूल इति कार्यविशेषारम्भायैव ज्ञानशक्तिवत् कर्तुः कर्मसम्बन्धः कार्यहेतुत्वेनैवावश्याश्रयणीयः, ज्ञानशक्तिवैचित्र्यस्य च कर्ममूलत्वात्। इच्छायाः कार्यारम्भहेतुत्वेऽपि विषयविशेषविशेषितायास्तस्याः सत्त्वादिमूलत्वेन कर्मसम्बन्धोऽवर्जनीयः। अतः क्षेत्रज्ञा एव कर्तारः, न तद्विलक्षणः कश्चिदनुमानात्सिद्ध्यति। भवन्ति च प्रयोगाः, तनुभुवनादि क्षेत्रज्ञकर्तृकं कार्यत्वात् घटवत्, ईश्वरः कर्ता न भवति प्रयोजनशून्यत्वात् मुक्तवत्, ईश्वरः कर्ता न भवति, अशरीरत्वात् तद्वदेव। न च क्षेत्रज्ञानां स्वशरीराधिष्ठाने व्यभिचारः, तत्राप्यनादेः सूक्ष्मशरीरस्य सद्भावात्। विमतिविषयः कालो न लोकशून्यः कालत्वात् वर्तमानकालवत् इति। अपि च किमीश्वरः सशरीरोऽशरीरो वा कार्यं करोति। न तावदशरीरः, अशरीरस्य तस्य कर्तृत्वानुपलब्धेः। मानसान्यपि कार्याणि सशरीरस्यैव भवन्ति, मनसो नित्यत्वेऽप्यशरीरेषु मुक्तेषु तत्कार्यादर्शनात्। नापि सशरीरः, विकल्पासहत्वात्। तच्च शरीरं किं नित्यमुतानित्यं वा। न तावन्नित्यम्, सावयवस्य तस्य नित्यत्वे जगतोऽपि नित्यत्वाविरोधादीश्वरासिद्धेः। नाप्यनित्यम्, तद्व्यतिरिक्तस्य तच्छरीरहेतोस्तदानीमभावात्। स्वयमेव हेतुरिति चेत्, न, अशरीरस्य तदयोगात्। अन्येन शरीरेण सशरीर इति चेत्, न, अनव

स्थानात्। स किं सव्यापारो वा निर्व्यापारो वा। अशरीरत्वादेव न सव्यापारः। नापि निर्व्यापारः कार्यं करोति, मुक्तात्मवत्। कार्यं जगद् इच्छामात्रव्यापारकर्तृकमित्युच्यमाने पक्षस्यासिद्धविशेषणत्वम्, दृष्टान्तस्य च साध्यहीनता। अतो दर्शनानुगुण्येनेश्वरानुमानं दर्शनानुगुण्यपराहतमिति शास्त्रैकप्रमाणकः परब्रह्मभूतः सर्वेश्वरः पुरुषोत्तमः। शास्त्रं तु सकलेतरप्रमाणपरिदृष्टसमस्तवस्तुविसजातीयं सार्वज्ञ्यसत्यसङ्कल्पत्वादिमिश्रानवधिकातिशयापरिमितोदारगुणसागरं निखिलहेयप्रत्यनीकस्वरूपं प्रतिपादयतीति न प्रमाणान्तरावसितवस्तुसाधर्म्यप्रयुक्तदोषगन्धप्रसङ्गः। यत्तु निमित्तोपादानयोरैक्यमाकाशादेर्निरवयवस्य द्रव्यस्य कार्यत्वं चानुपलब्धमशक्यप्रतिपादनमित्युक्तम्, तदप्यविरुद्धमिति "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" "न वियदश्रुतेरि"त्यत्र प्रतिपादयिष्यते। अतः प्रमाणान्तरागोचरत्वेन शास्त्रैकविषयत्वात् "यतो वा इमानी"त्यादिवाक्यमुक्तलक्षणं ब्रह्म प्रतिपादयतीति सिद्धम्॥

यद्यपि प्रमाणान्तरागोचरं ब्रह्म, तथाऽपि प्रवृत्तिनिवृत्तिपरत्वाभावेन सिद्धरूपं ब्रह्म न शास्त्रं प्रतिपादयतीत्याशङ्क्याह

समन्वयाधिकरणम्। **तत्तु समन्वयात्॥ ४॥**

प्रसक्ताशङ्कानिवृत्त्यर्थः तु शब्दः। 'तत्' शास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवत्येव। कुतः। "समन्वयात्" परमपुरुषार्थतयाऽन्वयः समन्वयः, परमपुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयाऽन्वयात्। एवमेव समन्वितो ह्यौपनिषदः पदसमुदायः "यतो वा इमानि भूतानि जायन्ते" "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" "ब्रह्म वा इदमेकमेवाग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" "एको ह वै नारायण आसीत्"। सत्यं ज्ञानमनन्तं ब्रह्म" 'आनन्दो ब्रह्मे"त्येवमादिः। न च व्युत्पत्तिसिद्धपरिनिष्पन्नवस्तुप्रतिपादनसमर्थानां पदसमुदायानामखिलजगदुत्पत्तिस्थितिविनाशहेतुभूताशेषदोषप्रत्यनीकापरिमि-

तोदारगुणसागरानवधिकातिशयानन्दस्वरूपे ब्रह्मणि समन्वितानां प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादनन्यपरत्वम्, स्वविषयावबोधपर्यवसायित्वात् सर्वप्रमाणानाम्। न च प्रयोजनानुगुणा प्रमाणप्रवृत्तिः, प्रयोजनं हि प्रमाणानुगुणम्। न च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वम्, पुरुषार्थान्वयप्रतीतेः तथा स्वरूपपरेष्वपि "पुत्रस्ते जातः" 'नायं सर्पः" इत्यादिषु हर्षभयनिवृत्तिरूपप्रयोजनवत्त्वं दृष्टम्॥

अत्राह, न वेदान्तवाक्यानि ब्रह्म प्रतिपादयन्ति, प्रवृत्तिनिवृत्त्यन्वयविरहिणः शास्त्रस्यानर्थक्यात्। यद्यपि प्रत्यक्षादीनि वस्तुयाथात्म्यावबोधे पर्यवस्यन्ति, तथाऽपि शास्त्रं प्रयोजनपर्यवसाय्येव, न हि लोकवेदयोः प्रयोजनरहितस्य कस्यचिदपि वाक्यस्य प्रयोग उपलभ्यते। न किञ्चित्प्रयोजनमनुद्दिश्य वाक्यप्रयोगः श्रवणं वा सम्भवति, तच्च प्रयोजनं प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमुपलब्धम् "अर्थार्थी राजकुलं गच्छेत्" "मन्दाग्निर्नाम्बु पिबेत्" "स्वर्गकामो यजेत" "न कलञ्जं भक्षयेत्" इत्यादिषु। यत्पुनः सिद्धवस्तुपरेष्वपि "पुत्रस्ते जातः" "नायं सर्पो रज्जुरेषा" इत्यादिषु हर्षभयादिनिवृत्तिरूपपुरुषार्थान्वयो दृष्ट इत्युक्तम्। तत्र किं पुत्रजन्माद्यर्थात् पुरुषार्थावाप्तिः, उत तज्ज्ञानादिति विवेचनीयम्। अतोऽप्यर्थस्याज्ञातस्यापुरुषार्थत्वेन तज्ज्ञानादिति चेत्, तर्ह्यसत्यप्यर्थे ज्ञानादेव पुरुषार्थः सिद्ध्यतीत्यर्थपरत्वाभावेन प्रयोजनपर्यवसायिनोऽपि शास्त्रस्य नार्थसद्भावे प्रामाण्यम्। तस्मात् सर्वत्र प्रवृत्तिनिवृत्तिपरत्वेन ज्ञानपरत्वेन वा प्रयोजनपर्यवसानमिति कस्यापि वाक्यस्य परिनिष्पन्ने वस्तुनि तात्पर्यासम्भवाच्च वेदान्ताः परिनिष्पन्नं ब्रह्म प्रतिपादयन्ति॥

अत्र कश्चिदाह, वेदान्तवाक्यान्यपि कार्यपरतयैव ब्रह्मणि प्रमाणत्वमनुभवन्ति। कथम्। निष्प्रपञ्चमद्वितीयं ज्ञानैकरसं ब्रह्मानाद्यविद्यया सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चं कुर्यादिति ब्रह्मणः प्रपञ्चविलयद्वारेण विधिविषयत्वमिति। कोऽसौ दृष्टृदृश्यरूपप्रपञ्चप्रविलयद्वारेण साध्यज्ञानैकरसब्रह्मविषयो विधिः। "न दृष्टेर्द्रष्टारं पश्येः, न मते-

मैत्रात्मन्वीत" इत्येवमादिः । द्रष्टृदृश्यभेदशून्यं वृत्तिमात्रं ब्रह्म कुर्यादित्यर्थः । स्वतःसिद्धस्यापि ब्रह्मणो निष्प्रपञ्चतारूपेण कार्यत्वमविरुद्धमिति ॥

तदयुक्तम्, नियोगवाक्यार्थवादिना हि नियोगो नियोज्यविशेषणं विषयः करणमितिकर्तव्यता प्रयोक्ता च वक्तव्याः । तत्र हि नियोज्यविशेषणमनुपादेयम्, तच्च निमित्तं फलमिति द्विधा । अत्र किं नियोज्यविशेषणम्, तच्च किं निमित्तं फलं वेति विवेचनीयम् । ब्रह्मस्वरूपापायास्यानुभवश्चेत् नियोज्यविशेषणम्, तर्हि न तत् निमित्तम्, जीवनादिवत् तस्यासिद्धत्वात्, निमित्तत्वे च तस्य नित्यत्वेनापवर्गोत्तरकालमपि जीवननिमित्ताग्निहोत्रादिवत् नित्यतद्विषयानुष्ठानप्रसङ्गः । नापि फलम्, नैयोगिकफलत्वेन स्वर्गादिवदनित्यत्वप्रसङ्गात् । कश्चात्र नियोगविषयः । ब्रह्मैवेति चेत्, न, तस्य नित्यत्वेनाभव्यरूपत्वात्, प्रमाणार्थत्वाच्च । निष्प्रपञ्चं ब्रह्म साध्यमिति चेत्, साध्यत्वेऽपि फलत्वमेव, प्रमाणार्थत्वाच्च विधिविषयत्वम् । साध्यत्वं च कस्य, किं ब्रह्मणः, उत प्रपञ्चनिवृत्तेः । न तावत् ब्रह्मणः, सिद्धत्वादनित्यत्वप्रसक्तेश्च । अथ प्रपञ्चनिवृत्तेः, न तर्हि ब्रह्मणः साध्यत्वम् । प्रपञ्चनिवृत्तिरेव विधिविषय इति चेत्, न, तस्याः फलत्वेन विधिविषयत्वायोगात् । प्रपञ्चनिवृत्तिरेव हि मोक्षः, स च फलम् । अस्य च नियोगविषयत्वे नियोगात् प्रपञ्चनिवृत्तिः, प्रपञ्चनिवृत्त्या नियोग इतीतरेतराश्रयत्वम् । अपि च किं निवर्तनीयः प्रपञ्चो मिथ्यारूपः सत्यो वा । मिथ्यारूपत्वे ज्ञाननिवर्त्यत्वादेव नियोगेन न किञ्चित्प्रयोजनम् । नियोगस्तु निवर्तकज्ञानमुत्पाद्य तद्द्वारेण प्रपञ्चस्य निवर्तक इति चेत्, स्वकारणादेव जातमिति न नियोगेन प्रयोजनम् । वाक्यार्थज्ञानादेव ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्याभूतस्य प्रपञ्चस्य बाधितत्वात् सपरिकरस्य नियोगस्यासिद्धिश्च । प्रपञ्चस्य निवर्त्यत्वे प्रपञ्चस्य निवर्तको नियोगः किं ब्रह्मस्वरूपमेव उत तद्व्यतिरिक्तः ।

१ साध्यत्वमिति पाठान्तरम् ।

यदि ब्रह्मस्वरूपमेव निवर्त्तकम्, नित्यतया निवर्त्यप्रपञ्चसद्भाव एव न सम्भवति, नित्यत्वेन च नियोगस्य विषयानुष्ठानसाध्यत्वं च न घटते। अथ ब्रह्मस्वरूपव्यतिरिक्तः, तस्य कृत्स्नप्रपञ्चनिवृत्तिरूपविषयानुष्ठानसाध्यत्वेन प्रयोक्ता च नष्ट इत्याश्रयाभावादसिद्धिः, प्रपञ्चनिवृत्तिरूपविषयानुष्ठानेनैव ब्रह्मस्वरूपव्यतिरिक्तस्य कृत्स्नस्य निवृत्तत्वात् न नियोगनिष्पाद्यं मोक्षाख्यं फलम्। किञ्च, प्रपञ्चनिवृत्तेर्नियोगकरणस्येतिकर्तव्यताऽभावात् अनुपकृतस्य च करणत्वायोगात् न करणत्वम्। कथमितिकर्तव्यताऽभाव इति चेत्। इत्थम्, अस्येतिकर्तव्यता भावरूपा, अभावरूपा वा। भावरूपा च करणशरीरनिष्पत्तितदनुग्रहकार्यभेदभिन्ना। उभयविधा च न सम्भवति, न हि मुद्गराभिघातादिवत् कृत्स्नप्रपञ्चनिवर्तकः कोऽपि दृश्यत इति दृष्टार्थो न सम्भवति। नापि निष्पन्नस्य करणस्य कार्योत्पत्तावनुग्रहः सम्भवति, अनुग्राहककार्यासद्भावेन कृत्स्नप्रपञ्चनिवृत्तिरूपकरणस्वरूपासिद्धेः। ब्रह्मणोऽद्वितीयस्वज्ञानं प्रपञ्चनिवृत्तिरूपकरणशरीरं निष्पादयतीति चेत्, तेनैव प्रपञ्चनिवृत्तिरूपो मोक्षः सिद्ध इति न करणादिनिष्पाद्यमवशिष्यत इति पूर्वमेवोक्तम्। अभावरूपत्वे चाभावा[1]देव न करणशरीरं निष्पादयति, नाप्य[2]नुग्रहम्। अतो निष्प्रपञ्चब्रह्मविषयो विधिर्न सम्भवति॥

अन्योऽप्याह, यद्यपि वेदान्तवाक्यानां न परिनिष्पन्नब्रह्मस्वरूपपरतया प्रामाण्यम्, तथापि ब्रह्मस्वरूपं सिद्ध्यत्येव। कुतः। ध्यानविधिसामर्थ्यात्। एवमेव हि समामनन्ति "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "य आत्माऽपहतपाप्मा" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "आत्मेत्येवोपासीत" "आत्मानमेव लोकमुपासीत"-इति। अत्र ध्यानविषयो हि नियोगः स्वविषयभूतध्यानं ध्येयैकनिरूपणीयमिति ध्येयमाक्षिपति, स च ध्येयः स्ववाक्यनिर्दिष्ट आत्मा। स किंरूप

१ अभावस्यादेवेति पाठान्तरम्।
२ नाप्यनुग्राहकमिति पाठान्तरम्।

इत्यपेक्षायां तत्स्वरूपविशेषसमर्पणद्वारेण "सत्यं ज्ञानमनन्तं ब्रह्म" "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि"त्येवमादीनां वाक्यानां ध्यानविधिशेषतया प्रामाण्यमिति विधिविषयभूतध्यानशरीरानुप्रविष्टब्रह्मस्वरूपेऽपि तात्पर्यमस्त्येव । अत्र "एकमेवाद्वितीयम्" "तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" "नेह नानाऽस्ति किञ्चने"त्यादिभिर्ब्रह्मस्वरूपमेकमेव सत्यं तद्व्यतिरिक्तं सर्वं मिथ्येत्यवगम्यते । प्रत्यक्षादिभिर्भेदावलम्बिना च कर्मशास्त्रेण भेदः प्रतीयते । भेदाभेदयोः परस्परविरोधे सति, अनाद्यविद्यामूलत्वेनापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इति निश्चीयते, तत्र ब्रह्मध्याननियोगेन तत्साक्षात्कारफलेन निरस्तसमस्ताविद्याकल्पितविविधभेदाद्वितीयज्ञानैकरसब्रह्मभावरूपो मोक्षः प्राप्यते । न च वाक्याद् वाक्यार्थज्ञानमात्रेण ब्रह्मभावसिद्धिः, अनुपलब्धेर्विविधभेददर्शनानुवृत्तेश्च, तथा च सति श्रवणादिविधानमनर्थकं स्यात् ॥

अत्रोच्यते, "रज्जुरेषा न सर्प" इत्युपदेशेन सर्पभयनिवृत्तिदर्शनात् रज्जुसर्पवत् बन्धस्यापि मिथ्यारूपत्वेन ज्ञानबाध्यतया तस्य वाक्यजन्यज्ञानेनैव निवृत्तिर्युक्ता, न नियोगेन । नियोगसाध्यत्वे मोक्षस्यानित्यत्वं स्यात्, स्वर्गादिवत्, मोक्षस्य नित्यत्वं हि सर्ववादिसम्प्रतिपन्नम् । किञ्च, धर्माधर्मयोः फलहेतुत्वं स्वफलानुभवानुगुणशरीरोत्पादनद्वारेणेति ब्रह्मादिस्थावरान्तचतुर्विधशरीरसम्बन्धरूपसंसारफलत्वमवर्जनीयम् । तस्मात् न धर्मसाध्यो मोक्षः । तथा च श्रुतिः "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इति । अशरीरत्वरूपे मोक्षे धर्माधर्मसाध्यप्रियाप्रियविरहश्रवणात् न धर्मसाध्यमशरीरत्वमिति विज्ञायते । न च नियोगविशेषसाध्यफलविशेषवत् ध्याननियोगसाध्यमशरीरत्वम्, अशरीरत्वस्य स्वरूपत्वेनासाध्यत्वात् । यथाहुः श्रुतयः "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् महान्तं विभुमात्मानं मत्वा धीरो न शोचति" "अप्राणो ह्यमनाः शुभ्रः" "असङ्गो ह्ययं पुरुष" इत्याद्याः । अतोऽशरीरत्वरूपो मोक्षो नित्य इति न धर्मसाध्यः । तथा च श्रुतिः "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् अन्यत्र भूता-

दृश्याच्च यत्तत्पश्यसि तद्वदे"ति । अपि च उत्पत्तिप्राप्तिविकृतिसंस्कृति-
रूपेण चतुर्विधं हि साध्यत्वं मोक्षस्य न सम्भवति । न तावत् उत्पाद्यः
मोक्षस्य ब्रह्मस्वरूपत्वेन नित्यत्वात् । नापि प्राप्यः आत्मस्वरूपत्वेन
ब्रह्मणो नित्यप्राप्तत्वात् । नापि विकार्यः, दध्यादिवदनित्यत्वप्रसङ्गात् ।
नापि संस्कार्यः, संस्कारो हि दोषापनयनेन वा गुणाधानेन वा साध्य-
ते । न तावत् दोषापनयनेन, नित्यशुद्धत्वात् ब्रह्मणः । नाप्यतिशया-
धानेन, अनाधेयातिशयस्वरूपत्वात् । नित्यनिर्विकारत्वेन स्वाश्रयायाः
पराश्रयायाश्च क्रियाया अविषयतया न नि[1]घर्षणेनादर्शादिवदपि संस्का-
र्यत्वम् । न च देहस्थया स्नानादिक्रियया आत्मा संस्क्रियते, [2]किन्त्ववि-
द्यागृहीतस्तत्संहतोऽहंकर्ता, तत्फलानुभवोऽपि तस्यैव । न चाहंकर्ता
आत्मा, तत्साक्षित्वात् । तथा च मन्त्रवर्णः "तयोरन्यः पिप्पलं स्वाद्व-
त्त्यनश्नन्नन्योऽभिचाकशीति" । "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनी-
षिणः" "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा, कर्माध्य-
क्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" "स पर्यगाच्छुक्रम-
कायमव्रणम "स्नाविरं शुद्धमपापविद्धम्" इति चाविद्यागृहीतादहंकर्तुरा-
त्मस्वरूपमनाधेयातिशयं नित्यशुद्धं निर्विकारं निरूप्यते । तस्मादात्म-
स्वरूपत्वेन न साध्यो मोक्षः । यद्येवम्, किं वाक्यार्थज्ञानेन क्रियत इति
चेत्, मोक्षप्रतिबन्धनिवृत्तिमात्रमिति ब्रूमः । तथा च श्रुतयः "त्वं हि नः
पिता योऽस्माकमविद्यायाः परम्पारन्तारयसि" "श्रुतं ह्येव मे भगवद्दृ-
शेभ्यः तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवा-
ञ्छोकस्य पारन्तारयतु" "तस्मै मृदितकषायाय तमसः पारं दर्शयति
भगवान् सनत्कुमार" इत्याद्याः । तस्मात् नित्यस्यैव मोक्षस्य प्रतिबन्ध-
निवृत्तिर्वाक्यार्थज्ञानेन क्रियते, निवृत्तिस्तु साध्याऽपि प्रध्वंसाभावरूपा न
विनश्यति । "ब्रह्म वेद ब्रह्मैव भवति" 'तमेव विदित्वाऽतिमृत्युमेति'-
इत्यादिवचनं मोक्षस्य ब्रह्मवेदनानन्तरभावितां प्रतिपादयत् नियोगव्यव-

---

१ निघर्षणेनेति पाठान्तरम् ।
२ अत्यादिरमिति पाठान्तरम् ।

धानं प्रतिपद्यते । न च विदिक्रियाकर्मत्वेन ध्यानक्रियाकर्मत्वेन वा कार्यानुप्रवेशः, उभयकर्मत्वप्रतिषेधात्, "अन्यदेव तद्विदितादथो अविदितादपि" "येनेदं सर्वं विजानाति तं केन विजानीयादि"ति, "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत" इति च । न चैतावता शास्त्रस्य निर्विषयत्वम्, अविद्यापरिकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य । न हीदन्तया ब्रह्म विषयीकरोति शास्त्रम्, अपि त्वविषयं प्रत्यगात्मस्वरूपं प्रतिपादयत् अविद्याकल्पितज्ञातृज्ञानज्ञेयविभागं निवर्त्तयति । तथा च शास्त्रम्, "न दृष्टेर्द्रष्टारम्पश्येरि"त्येवमादि । न च ज्ञानादेव बन्धनिवृत्तिरिति श्रवणादिविध्यानर्थक्यम्, स्वभावप्रवृत्तसकलेतरविकल्पविमुखीकरणद्वारेण वाक्यार्थावगतिहेतुत्वात्तेषाम् । न च ज्ञानमात्रात् बन्धनिवृत्तिर्न दृष्टेति वाच्यम्, बन्धस्य मिथ्यारूपत्वेन ज्ञानोत्तरकाले स्थित्यनुपपत्तेः । अत एव न शरीरपातादूर्द्ध्वमेव बन्धनिवृत्तिरिति वक्तुं युक्तम् । न हि मिथ्यारूपसर्पभयनिवृत्तिः रज्जुयाथात्म्यज्ञानातिरेकेण सर्पविनाशमपेक्षते । यदि शरीरसम्बन्धः पारमार्थिकः, तर्हि तद्विनाशापेक्षा, स तु ब्रह्मव्यतिरिक्ततया न पारमार्थिकः, यस्य तु बन्धो न निवृत्तस्तस्य ज्ञानमेव न जातमित्यवगम्यते, ज्ञानकार्यादर्शनात् । तस्माच्छरीरस्थितिर्भवतु वा मा वा, वाक्यार्थज्ञानसमनन्तरम् मुक्त एवासौ । अतो न ध्याननियोगसाध्यो मोक्ष इति न ध्यानविधिशेषतया ब्रह्मणः सिद्धिः, अपि तु "सत्यं ज्ञानमनन्तम्ब्रह्म" "तत्त्वमसि" "अयमात्मा ब्रह्मे"ति तत्परैरेव पदसमुदायेन सिध्यतीति ॥

तदयुक्तम्, वाक्यार्थज्ञानमात्रात् बन्धनिवृत्त्यनुपपत्तेः । यद्यपि मिथ्यारूपो बन्धो ज्ञानबाध्यः, तथाऽपि बन्धस्यापरोक्षत्वात् न परोक्षरूपेण वाक्यार्थज्ञानेन स बाध्यते, रज्ज्वादावपरोक्षसर्पप्रतीतौ विद्यमानायां नायं सर्पो रज्जुरेषेत्याप्तोपदेशजनितपरोक्षसर्पविपरीतज्ञानमात्रेण भयानिवृत्तिदर्शनात् । आप्तोपदेशस्य तु भयनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्षनिमित्तप्रवृत्तिहेतुत्वेन । तथा हि; रज्जुसर्पदर्शनभयात् परावृत्तः पुरुषो नायं सर्पो रज्जुरेषेत्याप्तोपदेशात् तद्वस्तुयाथात्म्यदर्शने

प्रवृत्तः तदेव प्रत्यक्षेण दृष्ट्वा भयान्निवर्तते। न च शब्द एव प्रत्यक्षज्ञानं जनयतीति वक्तुं युक्तम्, तस्यानिन्द्रियत्वात्, ज्ञानसामग्रीष्विन्द्रियाण्येवापरोक्षसाधनानि। न चास्यानभिसंहितफलकर्मानुष्ठानमृदितकषायस्य श्रवणमनननिदिध्यासनविमुखीकृतबाह्यविषयस्य पुरुषस्य वाक्यमेवापरोक्षज्ञानं जनयति, निवृत्तप्रतिबन्धे तत्परेऽपि पुरुषे ज्ञानसामग्रीविशेषाणामिन्द्रियादीनां स्वविषयनियमातिक्रमादर्शनेन तदयोगात्। न च ध्यानस्य वाक्यार्थज्ञानोपायता, इतरेतराश्रयत्वात्, वाक्यार्थज्ञाने जाते तद्विषयध्यानम्, ध्याने निर्वृत्ते वाक्यार्थज्ञानमिति। न च ध्यानवाक्यार्थज्ञानयोर्भिन्नविषयत्वम्, तथा सति ध्यानस्य वाक्यार्थज्ञानोपायता न स्यात्। न ह्यन्यध्यानमन्योन्मुख्यमुत्पादयति, ज्ञातार्थस्मृतिसन्ततिरूपस्य ध्यानस्य वाक्यार्थज्ञानपूर्वकत्वमवर्जनीयम्, ध्येयब्रह्मविषयज्ञानस्य हेत्वन्तरासम्भवात्। न च ध्यानमूलं ज्ञानं वाक्यान्तरजन्यं निवर्तकज्ञानं तत्त्वमस्यादिवाक्यजन्यमिति युक्तम्। ध्यानमूलमिदं वाक्यान्तरजन्यं ज्ञानं तत्त्वमस्यादिवाक्यान्तरजन्यज्ञानैकविषयं भिन्नविषयं वा। एकविषयत्वे तदेवेतरेतराश्रयत्वम्, भिन्नविषयत्वे ध्यानेन तदौन्मुख्यापादनासंभवः। किंच, ध्यानस्य ध्येयध्यात्राद्यनेकप्रपञ्चापेक्षत्वात् निष्प्रपञ्चब्रह्मात्मैकत्वविषयवाक्यार्थज्ञानोत्पत्तौ दृष्टद्वारेण नोपयोग इति वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिं वदतः श्रवणमनननिदिध्यासनविधीनामानर्थक्यमेव। यतो वाक्यादपरोक्षज्ञानासम्भवात् वाक्यार्थज्ञानेनाविद्या न निवर्तते, तत एव जीवन्मुक्तिरपि दूरोत्सारिता। का चेयं जीवन्मुक्तिः। सशरीरस्यैव मोक्ष इति, "माता मे वन्ध्या" इतिवत् व्याहतार्थं वचनम्, यतः सशरीरत्वं बन्धः अशरीरत्वं मोक्ष इति त्वयैव श्रुतिभिरुपपादितम्। अथ सशरीरत्वप्रतिभासे वर्तमाने अस्यायम्प्रतिभासोऽपि मिथ्येति प्रत्ययः तस्य सशरीरत्वनिवृत्तिरिति। न, मिथ्येति प्रत्ययेन सशरीरत्वं निवृत्तं चेत् कथं सशरीरस्य मुक्तिः, अजीवतोऽपि मुक्तिः सशरीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति कोऽयं जीवन्मुक्त[1] इति विशेषः। अथ सशरीरत्वप्रतिभा-

१ कोऽयं जीवन्मुक्तिरिति पाठान्तरम्।

सो बाधितोऽपि यस्य द्विचन्द्रज्ञानवत् अनुवर्तते स जीवन्मुक्त इति चेत् न, ब्रह्मव्यतिरिक्तसकलवस्तुविषयकत्वात् बाधकज्ञानस्य । कारणभूताविद्याकर्मादिदोषः सशरीरत्वप्रतिभासेन सह तेनैव बाधित इति बाधितानुवृत्तिर्न शक्यते वक्तुम्, द्विचन्द्रज्ञानादौ तु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानभूतचन्द्रैकत्वज्ञानाविषयत्वेनाबाधितत्वात् द्विचन्द्रप्रतिभासानुवृत्तिर्युक्ता । किंच, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्य" इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इति वदन्तीयं श्रुतिर्जीवन्मुक्तिं वारयति । सैषा जीवन्मुक्तिरापस्तम्बेनापि निरस्ता "इदानीमं लोकममुञ्च परित्यज्यात्मानमन्विच्छेत् बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम्, बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत, एतेन परं व्याख्यातमि"ति, अनेन ज्ञानमात्रान्मोक्षश्च निरस्तः । असमस्तफलभेद निवृत्तिरूपा मुक्तिर्जीवतो न सम्भवति । तस्मात् ध्याननियोगेन ब्रह्मापरोक्षज्ञानफलेनैव बन्धनिवृत्तिः । न च नियोगसाध्यत्वे मोक्षस्यानित्यत्वप्रसक्तिः, प्रतिबन्धनिवृत्तिमात्रस्यैव साध्यत्वात् । किंच, न नियोगेन साक्षात् बन्धनिवृत्तिः क्रियते, किन्तु निष्प्रपञ्चज्ञानैकरसब्रह्मापरोक्षज्ञानेन, नियोगस्तु तदा[1]परोक्ष्यज्ञानं जनयति । कथं नियोगस्य ज्ञानोत्पत्तिहेतुत्वमिति चेत् । कथं वा भवतोऽनभिसंहितफलानां कर्मणां वेदनोत्पत्तिहेतुत्वम् । मनोनैर्मल्यद्वारेणेति चेत् । ममापि तथैव । मम तु निर्मले मनसि शास्त्रेण ज्ञानमुत्पाद्यते, तव तु नियोगेन मनसि निर्मले ज्ञानसामग्री वक्तव्येति चेत् । ध्याननियोगनिर्मलं मन एव साधनमिति ब्रूमः । केनावगम्यत इति चेत् । भवतो वा कर्मभिर्मनो निर्मलं भवति, निर्मले मनसि श्रवणमनननिदिध्यासनैः सकलेतरविषयविमुखस्यैव शास्त्रं निष्कलंकज्ञानमुत्पादयतीति केनावगम्यते । "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" 'ब्रह्म वेद ब्रह्मैव भवती"त्यादिभिः शास्त्रैरिति चेत् । ममापि "श्रोतव्यो मन्तव्यो

१ तदाऽपरोक्षज्ञानमिति पाठान्तरम् ।

निदिध्यासितव्यः" "ब्रह्मविदाप्नोति परम्" "न चक्षुषा गृह्यते नापि वाचा" "मनसा तु विशुद्धेन" "हृदा मनीषा मनसाऽभिक्लृप्तः" इत्यादिभिः शास्त्रैर्ध्याननियोगेन मनो निर्मलं भवति, निर्मलं च मनो ब्रह्मापरोक्षज्ञानं जनयतीत्यवगम्यत इति निरवद्यम् । "नेदं यदिदमुपासते" इत्युपास्यत्वं प्रतिषिद्धमिति चेत् । नैवम्, नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते, अपि तु ब्रह्मणो जगद्वैरूप्यं प्रतिपाद्यते, यदिदं जगदुपासते प्राणिनः नेदं ब्रह्म, तदेव ब्रह्म त्वं विद्धि यद्वाचाऽनभ्युदितं येन वागभ्युद्यते इति वाक्यार्थः । अन्यथा "तदेव ब्रह्म त्वं विद्धी"ति विरुद्धेत, ध्यानविधिवैयर्थ्यं चात्मनः स्यात् । अतो ब्रह्मसाक्षात्कारफलेन ध्याननियोगेनैवापरमार्थभूतस्य कृत्स्नस्य द्रष्टृदृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः ॥

यदपि कैश्चिदुक्तम्, भेदाभेदयोर्विरोधो न विद्यत इति तदयुक्तम्, न हि शीतोष्णतमःप्रकाशादिवद् भेदाभेदावेकस्मिन्वस्तुनि सङ्गच्छेते । यथोच्येत, सर्वमेव हि वस्तुजातं प्रतीतिव्यवस्थाप्यम्, सर्वं च भिन्नाभिन्नं च प्रतीयते, कारणात्मना जात्यात्मना चाभिन्नम्, कार्यात्मना व्यक्त्यात्मना च भिन्नम् । छायातपादिषु विरोधः सहानवस्थानलक्षणो भिन्नाधारत्वरूपश्च । कार्यकारणयोर्जातिव्यक्त्योश्चैवं तदुभयमपि नोपलभ्यते प्रत्युत एकमेव वस्तु द्विरूपं प्रतीयते, यथा मृद्रूपं घटः, खण्डो गौः मुण्डो गौरिति । न चैकरूपं किंचिदपि वस्तु लौकि[1]कैर्दृष्टचरम्, न च तृणादेर्ज्वलनादिवत् अभेदो भेदोपमर्दी दृश्यत इति न वस्तुविरोधः, मृत्सुवर्णगवाश्वाद्यात्मनाऽवस्थितस्यैव घटमुकुटखण्ड[2]मुण्डाद्यात्मना चावस्थानात् । न चाभिन्नस्य भिन्नस्य च वस्तुनोऽभेदे भेदश्चैक एकाकार इतीश्वराज्ञा । प्रतीतत्वादैकरूप्यं चेत्, प्रतीतत्वादेव भिन्नाभिन्नत्वमिति द्वैरूप्यमप्यभ्युपगम्यताम् । न हि विस्फारिताक्षः पुरुषो घटशरावखण्डमुण्डादिषु वस्तूपलभ्यमानेष्विदं मृत्, अयञ्च घटः, इदञ्च गोत्वम्, इयं व्यक्तिरिति विवेक्तुं शक्नोति, अपि तु

१ लोके दृष्टचरमिति पाठान्तरम् ।
२ खण्डमुण्डगवाद्यात्मना इति पाठान्तरम् ।

अथ लिङ्गभूयस्त्वा-
धिकरणम् १८।

**लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥**

तैत्तिरीया[1] दहरविद्यानन्तरमधीयते[2]–

"सहस्रशीर्षं देवं विश्वाक्षं[3] विश्वश[4]म्भुवम् ।
विश्वं नारायणं देवमक्षरं परमं पद[5]"मित्यारभ्य[6]–
"सोऽक्षरः परमः स्वरा"डित्यन्तम् ।

तत्र संशयः–किं पूर्वप्रकृतविद्यैकविद्यात्वेन तदुपास्यविशेषनिर्द्धारणमनेन क्रियत उत सर्ववेदान्तोदितपरविद्योपास्यविशेषनिर्धारणमिति । किं युक्तम् । दहरविद्योपास्यविशेषनिर्धारकमिति । कुतः । प्रकरणात् । पूर्वस्मिन्ननुवाके दहरविद्या हि प्रकृता–

"दहरं विपाप[7] परवेश्मभूतं
यत्पुण्डरीकं पुरमध्यसंस्थम् ।
तत्रापि दह्रं गगनं विशोक-
स्तस्मिन् यदन्तस्तदुपासितव्य"मिति ।

अस्मिंश्चानुवाके "पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुख"मित्यादिना हृदयपुण्डरीकाभिधान[8]मस्य नारायणानुवाकस्य दहरविद्योपास्यनिर्धारणार्थत्वमुपोद्बलयतीत्येवं प्राप्ते प्रचक्ष्महे–

'लिङ्गभूयस्त्वा'दिति । अस्य निखिलपर[9]विद्योपास्यविशेषनिर्धारणार्थत्वे भूयांसि लिङ्गानि दृश्यन्ते । तथा हि, परविद्यास्वक्षरशिवशम्भुपरब्रह्मपरज्योतिःपरतत्त्वपरमात्मादिशब्दनिर्दिष्टमुपास्यं वस्त्विह तैरेव शब्दैरनूद्य तस्य नारायणत्वं वि[10]धीयते । भूयसीषु विद्यासु श्रुतानऽनूद्य

१ तैत्तिरीयके–इति मु॰ पु॰ ।   २ अभिधीयत इति लि॰ पु॰ ।
३ विश्वशाख्यमिति लि॰ पु॰ ।   ४ शंभवमिति पु॰ द्वयेपि ।
५ विश्वमित्यर्द्धं लि॰ पु॰ नास्ति, पदमित्यस्य स्थाने प्रभुमिति मु॰ पु॰ ।
६ शंभवमित्यादि आरभ्येति लि॰ पु॰ ।
७ विपाप्ममिति मु॰ पु॰ ।   ८ पुण्डरीकमभिध्यानमिति लि॰ पु॰ ।
९ परस्येति लि॰ पु॰ ।   १० अस्यमभीति लि॰ पु॰ ।

नारायणत्वविधानभूयस्त्व नारायण एव सर्वविद्यासूपास्यमऽस्यूनत्वादि-विशेषितानन्दादिगुणक[1] परं ब्रह्मेति विशेषनिर्णये 'भूयो'—बहुतरं लिङ्गं भवति। अत्र 'लिङ्ग'—शब्दश्चिह्नपर्यायः, चिह्नभूतं वाक्यं बहुतरमस्तीत्यर्थः। तद्धि प्रकरणाद्बलीयः। तदप्युक्तं प्रथमे काण्डे "श्रुतिलिङ्गवाक्यप्रकरणस्थान-समाख्यानां समवाये पारदौर्बल्य[*]मर्थविप्रकर्षा"दिति। यत्तूक्तम्[2]—पङ्को-यप्रतीक्षायामित्यादि वचन दहरविद्या[3]शेषत्वमस्योपोद्बलयतीति, तत्र, बलीयसा[4] प्रमाणेन सर्वविद्योपास्यनिर्धारणार्थत्वेऽवधृते[5] सति दहरविद्यायामपि तस्यैव नारायणस्योपास्यत्वेन तद्वचनोपपत्तेः। न च 'सहस्रशीर्ष'मित्यादिद्वितीयानिर्देशेन पूर्वानुवाकोदितोपास्तिना[6] सम्बन्धः शङ्कनीयः, 'तस्मिन् यदन्तस्तदुपासितव्य'मित्युपास्तिगतेन कर्मत्वयेनोपास्यस्य[7] कर्मणोऽभिहितत्वात्तदुपास्ये द्वितीयाऽनुपपत्ते[8]"विश्वमेवेदं पुरुष" 'तत्त्वं नारायणः पर' इत्यादिप्रथमानिर्देशाच्च प्रथमार्थे[9] द्वितीया वेदितव्या।

"अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः"।

"तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः।

स ब्रह्मा[10] स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्"॥—

इति निर्देशे[11] सर्वस्मात्परो नारायण एव सर्वोपास्य इति निर्णीयमानत्वाच्च प्रथमार्थे[12] द्वितीयेति निश्चीयते॥

लिङ्गभूयस्त्वाधिकरणं समाप्तम्॥ १८॥

---

१ ०स्त्वादिविशेषितानन्दित्वाकमिति लि॰ पु। ** पारदौर्बल्यमिति पु॰ दृश्येव।
२ पारदौर्बल्यमर्थविप्रकर्षादिति युक्तमिति लि॰ पु॰ प्रमादः।
३ विद्येति नास्ति लि॰ पु। ४ तत्राबलीयसेति लि॰ पु॰ प्रमाद।
५ निर्धारणार्थत्वं. विधत्ते—इति लि पु॰।
६ ०वाकोदितोपास्तिनामिति लि॰ पु॰। * उपास्तियतेनेति पाठान्तरम्।
७ उपासनस्येति लि पु॰।
८ तदुपास्य द्वितीया उपपत्तेरिति लि॰ पु॰।
९ प्रथमार्था—इति लि पु॰। १० स ब्रह्म—इति मु पु।
११ निर्देशे—इति लि पु। १२ ०र्था—इति लि पु॰।

अथ पूर्वविकल्पा- धिकरणम् १९ । **पूर्वविकल्पः प्रकरणात् स्यात्[1] क्रियामानसवत् ॥ ४४ ॥**

वाजसनेयकेऽग्निरहस्ये मनश्चिदादयोऽग्नयः श्रूयन्ते मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचित इति। तत्र संशयः—किमेते मनश्चिदादयः सम्पादिकत्वेन[2] विद्यारूपा अग्नयः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपा आहो स्विद्विद्यामयक्रत्वनुप्रवेशेन विद्यारूपा एवेति विशये[3] क्रियारूपत्वं तावदाह 'पूर्वविकल्प' इत्यादिना। चित्याग्नित्वेन[4] सम्पादितानामेषां मनश्चिदादीनां क्रत्वनुप्रवेशसाकाङ्क्षायां स्वविषये क्रतुविध्यभावात् पूर्वेणा "सद्वा इदमग्र आसी"दित्यादिनेष्टकाचितस्याग्नेः प्रकृतत्वात् तस्य च क्रियामयक्रत्वव्यभिचारित्वेन तत्र क्रतुसंविधानात् तत्प्रकरणगृहीता[5] मनश्चिदादयस्तेनेष्टकाचितेनाग्निना विकल्प्यमानाः क्रियारूपा[6] एव स्युः। विद्यारूपाणामपि क्रियामयक्रत्वनुप्रवेशेन क्रियारूपत्वं मानसग्रहवदुपपद्यते। यथा द्वादशाहे अवि[7]वाक्ये दशमेऽहनि मानसग्रहस्य मनोनिष्पाद्यग्रहणासादन[8]स्तोत्रशस्त्रप्रत्याहरणभक्षण[9]त्वेन विद्यारूपस्यापि[10] क्रियामयक्रत्वङ्गतया क्रियारूपत्वम्, तथेहापि।

**अतिदेशाच्च ॥ ४५ ॥**

इतश्चेष्टकाचितेनाग्निना मनश्चिदादीनां विकल्पः क्रियारूपत्वं चावगम्यते। "तेषामेकैक एव तावान् यावानसौ पूर्व" इति पूर्वस्येष्टकाचितस्याग्नेर्वीर्यं मनश्चिदादिष्वतिदिश्यते, तेन तुल्यकार्यत्वाद्विकल्पः। अतश्चेष्टकाचितवत्तत्क्रतुनिवेशनेन[11] तदङ्गभूता मनश्चिदादयः क्रियामयक्रत्वनुप्रवेशेन क्रिया[12]रूपा एव। इत्येवं प्राप्ते प्रचक्ष्महे—

---

१ स्यादिति लि० पु० नास्ति। * चित्-इत्यस्य स्थाने चित-इति प्रकरणमात्रे पु दृश्यते।
२ साक्षाद्धितत्वेनेति लि० पु०।
३ विषय—इति लि० पु०।
४ चित्याग्नित्वेनेति लि० पु०।
५ प्रकरणाद्यभिहिता इति लि० पु०।
६ क्रिया इति लि० पु०।
७ आदि—इति लि० पु०।
८ ग्रहणसाधनाद्यपेक्षे-इति लि० पु०।
९ भक्षयेति लि० पु०।
१० अपिर्नास्ति लि० पु०।
११ ०वत् क्रतुपूर्वे निवर्तते—इति लि० पु०।
१२ ०दयः क्रियेति लि० पु०।

## विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ४६ ॥

'तु'-शब्दः पक्षं व्यावर्तयति। यदुक्तम्—मनश्चिदादयः क्रियामयक्रत्वनुप्रवेशेन क्रियामया एवेति, नैतदस्ति, विद्यारूपा एवैते, विद्यारूपक्रत्वन्वयिन इत्यर्थः। कुतः। 'निर्धारणाद्दर्शनाच्च'। निर्धारणं तावत् "ते हैते विद्याचित एव विद्यया हैवैत एवंविदश्चिता[1] भवन्ती"ति यथाहूतश्चक्षुरादिव्यापाराणामिष्टकादिचयनानुपपत्तेर्मनसा सम्पादितानित्वेन विद्यारूपत्वे सिद्धेऽपि 'विद्याचित एव' 'विद्यया हैवैत' इति चावधारणं विद्यामयक्रत्वन्वयेन विद्यारूपत्वज्ञापनार्थमिति निश्चीयते। दृश्यते चाग्नेरेषां शेषी विद्यारूपः क्रतुः "ते[2] मनसैवा*धीयन्त मनसाचीयन्त मनसैषु[3] ग्रहा अगृह्यन्त मनसाऽस्तुवन्[4] मनसाऽशंसन्[5] यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं[6] कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियते"ति[7]। इष्टकाचितेष्वग्निषु यत्क्रियामयं यज्ञियं[8] कर्म क्रियते, तन्मनोनिर्वर्त्येषु[9] मनश्चिद[10]ग्निषु मनोमयमेवाक्रियते"ति[11] वचनात् क्रतुरपि विद्यामयोऽत्र प्रतीयते।

नन्वत्र विधिपदाश्रवणात् फलसम्बन्धा[12]प्रतीतेश्चेष्टकाचितान्युप[13]स्थापितक्रियामयक्रतुप्रकरणाद्विद्यामयक्रत्वन्वयेन विद्यारूपतैषां बाध्येत,[15] नेत्याह—

१ एवं विद्याचिता इति लि० पु०।
२ चात्र तेषां शेषि विद्यारूपं क्रतुः तेन—इति लि० पु०।
* मनसैवेति प्राय· पुनःपुनः पु· दृश्यते।   ३ मनसैव—इति लि० पु०।
४ स्तुवन्तीति पु० दृश्यते।   ५ शंसन्तीति मु० पु०।
६ मनसा पश्यति—इति मु० पु०, मनसा पश्यन्त—इति लि० पु० चाधिकमत्र।
७ यज्ञमिति लि० पु०।
८ ०मय क्रियते ते—इति लि० पु०।   ९ यज्ञीयमिति मु० पु०।
१० तन्मनोमिक्रत्वनुप्रवेशेनापि न सिद्ध्यति यत्र इष्टके चितान्ने स्यक्सूत्रोऽत्र प्रकृत प्रदेश मनश्चिदादीनामपि विद्यामयक्रतुप्रवेशेन फलविधनिर्देशादवगम्यते पक्ष च ग्रहस्य तावद्दृश्यं तद्विद्यामयविद्यामतिपादितमवगम्यते पक्ष हि प्रकरणा मार्य चाग्नेरेक यदोऽनिर्वत्तसाम्यायनोक्तार्थं—इति लि० पु०।
११ ०श्चिदाद्य—इति मु० पु०।   १२ ०मेव क्रियते इति—इति लि० पु०।
१३ ०र्सम्बन्धादिति लि० पु०।   १४ ०नयः—इति लि० पु०।
१५ ०रूपतैषां बाध्यते—इति लि० पु०।

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥

'श्रुतिलिङ्गवाक्यानां प्रकरणाद्बलीयस्त्वेन'[1] श्रुत्याद्यवगतः क्रतुरेषां तदन्वयश्च दुर्बलेन प्रकरणेन बाधितुं न शक्यते । श्रुतिस्तावत्—"ते हैते विद्याचित एवे"ति, तां विशृणोति "विद्यया हैवैत एवंविदश्चिता भवन्ती"ति । 'विद्यया'—विद्यामयेन क्रतुना सम्यक् मनश्चिदादयश्चिता भवन्तीत्यर्थः । "तान्[2] हैतानेवंविदे सर्वदा सर्वाणि भूतानि[3] चिन्वन्त्यपि स्वपते"—इति लिङ्गम् । वाक्यं च "एवंविदे चिन्वन्ती"ति । समभिव्याहारो वाक्यम् । एवंविदे विद्यामयक्रतुमते सर्वदा सर्वाणि भूतानि [4]चिन्वन्तीत्यर्थः । सर्वभूतकर्तृकं सर्वकालव्यापिचयनं[5] मनसा सम्पादितं परिमितकर्तृकालक्रियामयेष्टकचितकार्यद्वारेण क्रत्वनुप्रवेशसम्भव[6]मलभमानं विद्यामयक्रत्वनुप्रवेशे लिङ्गं भवति ।

यच्चेदमुक्तम्—विधिप्रत्ययाश्रवणात् फलसम्बन्धाप्रतीतेश्च क्रियामयात्क्रतोरन्योऽत्र विद्यामयः क्रतुर्न सम्भवतीति, तत्राह—

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ४८ ॥

इष्टकचितान्वयिनः क्रियामयात्क्रतोर्विद्यामयोऽयं क्रतुः[7] पृथक्त्वेनानुबन्धादिभ्यः पृथक्त्वहेतुभ्योऽवगम्यते । अनुबन्धाः यज्ञानुबन्धिनो ग्रहस्तोत्रशस्त्रादयः "मनसैव ग्रहा अगृह्यन्त मनसा ऽस्तुवत[8] मनसाऽशंसन्"-इत्यादिना प्रतिपादिताः । 'आदि'-शब्देन श्रुत्यादयः पूर्वोक्ता गृह्यन्ते । श्रुतिलिङ्गादिभिः सानुबन्धैर्विद्यामयः क्रतुः पृथगवगम्यत इत्यर्थः । 'प्रज्ञान्तरपृथक्त्ववत्,' यथा प्रज्ञाऽन्तरं दहरविद्यादि क्रियामयात्क्रतोः पृथ-

---

१ प्रकरणाल्लिङ्गस्यैवेति लि० पु० प्रमादः । २ तानिति मु० पु० ।
३ पिचन्त्यत्र लि० पु० । ४ चीत्यधिकं मु० पु० ।
५ ०चयेन—इति लि० पु० । ६ समर्पेति लि० पु० नास्ति ।
७ युत इति लि० पु० । ८ स्तुवन्तेति मु० पु०, स्तुवचिति लि० पु० ।

भूत श्रुत्यादिभिरव[1]गम्यते, एवमयमपि । एवं चानुबन्धादिभिः पृथग्भूते विद्यामये यज्ञेऽवगते सति विधिः परिकल्प्यते । दृष्टश्चानुवादसरूपेषु[2] कल्प्यमानो विधिः । तदुक्तम्–"वचनानि त्व[3]पूर्वत्वा"दिति । फलवत्त्वं च "तेषामेकैक[4] एव तावान् यावानसौ पूर्व"इत्यतिदेशात् स्वक्रतुद्वारेणे-ष्टकाचितस्याग्नेर्यत्फलम्, तदेव मनश्चिदादीनामपि स्वक्रतुद्वारेण फलमि-त्यवगम्यते ।

यत्पुनरतिदेशेन तुल्यवीर्यत्वा[5]वगमात् क्रियामयक्रत्वनुप्रवेशो ऽवगम्यत इत्युक्तम्, तत्राह–

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ४९ ॥

नावश्यमतिदेशादवान्तरव्यापारस्यापि तुल्यतया भवितव्यम्, येन क्रियामयक्रत्वनुप्रवेश एषां स्यात् । यस्मा[6]त्कस्माच्चित्सामान्यमात्रादति-देशोपलब्धेः । उपलभ्यते हि "स एष एव मृत्युर्य एतस्मिन्मण्डले पुरुष" इत्यादिषु संहर्तृत्वादिसामान्यमात्रादतिदेशः[7] । न हि तत्र मण्डलपुरु-षस्य मृत्युवत्तल्लोकापत्तिस्तद्व्यापारोऽपि भवति, एवमिहापि मनश्चि-दादीनामिष्टकाचिताग्निवद्व्यापारातिदेशमात्रेणेष्टकाचिताग्निदेशरूपक्रियाम-यक्रत्वनुप्रवेशेनापि न भवितव्यम् । अत इष्टकाचिताग्नेः स्वक्रतुद्वारेण यत्फलम्, तदेव मनश्चिदादीनामपि विद्यामयक्रतुद्वारेण फलमित्यति-देशादवगम्यते ।

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५० ॥

परेण च ब्राह्मणेनास्यापि मनश्चिदाद्य[8]भिधायिनः शब्दस्य ताद्विध्यम्–तद्विधत्वं, विद्यामयत्वप्रतिपादित्व[9]मवगम्यते । परेण हि ब्राह्म-

---

१ दिभिश्चेति लि० पु० ।
२ स्वरूपेष्विति लि० पु० ।    ३ वचनानित्यपूर्वेति लि० पु० ।
४ फल च तेषामेकैक इति मु० पु० ।
५ तुल्यकार्यत्वेति क्वचित् ।    ६ यस्मादिति द्वितु० पु० ।
७ ०मात्रातिदेश इति मु०, लि० तु ०मात्राद्यतिदेश इति । .
८ चादिपदयो नास्ति लि० पु० ।    ९ ०प्रतिपादित्वमिति लि० पु० ।

येन—"अयं वाव लोक एषोऽग्निश्चितः[1]तस्यापः एवं परिश्रितः" इत्यादिना "स यो हैतदेवं वेद लोकंपृणामेनं[2] भूतमेतत्सर्वमभिसंस्करोति" इति पृथक्फलेन विद्यैव विधीयते। तथा वैश्वानरविद्यादौ विद्यैव विधीयते। अतोऽग्निरहस्यस्य[3] क्रियैकविषयत्वं नास्ति। एवं तर्हि विद्यामया मनश्चिदादयो बृहदारण्यकेऽनुबन्धयाः किमर्थमिहानुबध्यन्ते। तत्रोच्यते—'भूयस्त्वात्त्वनुबन्ध' इति। मनश्चिदादिषु सम्पादनीयानामग्न्यङ्गानां भूयस्त्वात्तत्सविधाविहानुबन्धः कृतः॥

पूर्वविकल्पाधिकरणं समाप्तम्॥ १९॥

---

अथ शरीरे भावाधिकरणम् २०। **एक आत्मनः शरीरे भावात्॥५१॥**

सर्वासु परविद्यासूपास्योपासनस्वरूपवदुपासकस्वरूपस्यापि ज्ञातव्यत्वमुक्तम्—'त्रयाणामेव चैवमुपन्यासः प्रश्नश्चे'ति। वक्ष्यति चास्य प्रत्यगात्मनः परमात्मात्मकत्वेनानुसन्धानं "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति। किमयं प्रत्यगात्मा ज्ञाता कर्ता भोक्तेहामुत्र संचरणशीलो[4]ऽनुसन्धेय उत प्रजापतिवाक्योदितापहतपाप्मत्वादिस्वरूपः। किं युक्तम्। ज्ञातृत्वाद्याकारमात्र इत्येके मन्यन्ते। कुतः। अस्योपासकस्या'त्मनः शरीरे भावात्,' आत्मनः शरीरे वर्तमानस्य तादृशमेव रूपम्, तावतैवानुसन्धानेन तत्फलसिद्ध्युपपत्तेश्च। न हि कर्मस्वधिकृतानां स्वर्गादिफलार्थिनां ज्ञातृत्वाद्यतिरेकेण फलानुभवदशायां यादृशं रूपम्, तादृशं रूपं साधना[5]नुष्ठानदशायामनुसन्धातव्यम्, तावतैव साधनानुष्ठानतत्फलयोः सिद्धेः, अतिरिक्तानुसन्धाने प्रयोजनाभावात्। तदविशेषादिहापि तथैव। ननु चात्र[6] "यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति विशेषवचनादपहतपाप्मत्वाद्याकार[7] एवानुसन्धातव्य[8] इत्य-

---

१ अग्निश्चित इति लि० पु०।
२ लोकंपृणानमेवोमिति मु० पु०, लोकपुराणानामेनमिति लि० पु०।
३ ०रहस्येति लि० पु०। ४ ०कम इति लि० पु०।
५ तावता—इति लि० पु०। ६ न तु यात्रेति लि० पु०।
७ ०त्याधिकारे—इति लि० पु०। ८ ०तव्ये—इति लि० पु०।

अवगम्यते, नैवम्,[1] "तं यथायथोपासते" इत्युपास्यविषयत्वादस्य–इत्येवं प्राप्ते प्रचक्ष्महे–

## व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५२ ॥

न त्वे'तदस्ति–यत् ज्ञातृत्वाद्याकार एवानुसन्धेय इति। अस्यात्मनः संसारदशायां[3] मोक्षदशायां यो व्यतिरेकः सोऽपहतपाप्मत्वादिकोऽनुसन्धेयः। अस्य मोक्षदशायां यादृशं रूपं तादृग्रूप एवोपासनवेलायामात्माऽनुसन्धेय इत्यर्थः। कुतः। 'तद्भाव[4]भावित्वा'त्तद्रूपापत्तेः। "यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" "तं यथायथोपासते तथैव भवती"ति यथोपासनमेव हि प्राप्तिः श्रूयते। न च परस्वरूपमात्रविषयमेवेदमिति वक्तुं शक्यते, प्रत्यगात्मनोऽप्युपास्यभूतपरब्रह्मशरीरतयोपास्यकोटिनिविष्टत्वात्। अतः प्रत्यगात्मनोऽपहतपाप्मत्वादिगुणकप्रत्यगात्मशरीरपरमात्मोपासनस्य[5] तथारूपमेव प्राप्यमित्युक्तं भवति। अत एवै'वंक्रतुरितोऽमुं लोकं प्रेत्या[6]ऽभिसम्भवितास्मी'त्युच्यते। तस्मात्प्रत्यगात्मा प्राप्याकार एवानुसन्धेयः। 'उपलब्धिवत्'–ब्रह्मोपलब्धि[7]वत्। यथा ब्रह्मोपलब्धिर्विहिता यथावस्थितब्रह्मस्वरूपविषया, तथाऽऽत्मोपलब्धिरपि यथाऽवस्थितात्मस्वरूपविषयेत्यर्थः। कर्मस्वाऽऽत्मस्वरूपानुसन्धानं न* कर्माङ्गम्, "यजेत[8] स्वर्गकाम" इति कर्मानुष्ठानमेव[9] हि फलाय चोद्यते, देहातिरिक्तज्ञातृ[10]त्वाद्याकारात्मावगतिः कालान्तरभाविफलसाधनकर्माधिकारायेति तावन्मात्रमेव तत्रापेक्षितमिति न किञ्चिदवहीनम्[11] ॥

शरीरे भावाधिकरणं समाप्तम् ॥ २० ॥

---

१ नैव–इति लि० पु०।
२ [illegible]–इति लि० पु०।
३ ०दशायामिति लि० पु०।
४ तद्भावा–इति लि० पु०।
५ ०प्रत्यगात्मशरीरपरमात्मा उपासनस्येति लि० पु०।
६ अतो यथं क्रतु इहामुं प्रेत्येति लि० पु०।
७ ब्रह्मोपासनेनेति लि० पु०।
* पु० द्वयेपि नेति नास्ति।
८ यजेतेति लि० पु०।
९ ०ष्ठान एवेति लि० पु०।
१० देहातिरिक्तज्ञान–इति लि० पु०।
११ तावन्मात्रमेवेति न किंचिदवहीनमिति लि० पु०।

अथाङ्गावबद्धाधिकरणम् ३१।

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥

"ओमित्येत[1]दक्षरमुद्गीथमुपासीत" "लोकेषु पञ्चविधं सामोपासीत" "उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवी अयं वाव[2] लोक एषोऽग्निश्चित"[3] इत्येवमाद्याः क्रत्वङ्गाश्रया उपासना भवन्ति। ताः किं यासु शाखासु श्रूयन्ते तास्वेव नियता, उत सर्वासु शाखासु[4]द्गीथादिषु सम्बध्यन्त इति विचारः। सर्ववेदान्तप्रत्ययत्वे स्थितेऽपि प्रतिवेदं स्वरभेदादुद्गीथादयो भिद्यन्त इति तत्तत्र व्यवतिष्ठेरन्निति युक्ता शङ्का। किं युक्तम्। व्यवतिष्ठेरन्निति। कुतः। 'उद्गीथमुपासीते'ति सामान्येनोद्गीथसम्बन्धितया श्रुतायास्तस्यामेव शाखायां स्वरविशेषयुक्तस्योद्गीथविशेषस्य संनिधाना,त्तस्मिन्नेव विशेषे पर्यवसानं युक्तमित्यत[5]'आम्नातास्वेव[6]' शाखासु व्यवतिष्ठेरन्नित्येवं प्राप्ते प्रचक्ष्महे—

'अङ्गावबद्धास्त्वि'ति। 'तु'-शब्दः पक्षं व्यावर्तयति। न ह्युद्गीथाद्यङ्गावबद्धा उपासनास्तास्वेव शाखासु व्यवतिष्ठेरन्, अपि तु प्रतिवेदं सम्बध्येरन्, सर्वासु शाखास्वित्यर्थः। 'हि'-शब्दो हेतौ। यस्माच्छ्रुत्यैवोद्गीथाद्यङ्गमात्रावबद्धा, तस्मात् यत्रोद्गीथादयस्तत्र सर्वत्र सम्बध्येरन्। यद्यपि स्वरभेदेनोद्गीथव्यक्तयो भिद्यन्ते, तथाऽपि सामान्येनोद्गीथश्रुत्या सर्वा व्यक्तयः संनिहिता इति न क्वचिद् व्यवस्थायां प्रमाणमस्ति। सर्वशाखाप्रत्ययन्यायेन च सर्वासु शाखासु क्रतुरेकः। अतः सर्वासु शाखास्वेकस्य क्रतोः संनिधानात् क्रत्वङ्गभूतोद्गीथादयोऽपि संनिहिता इति नैकस्य संनिधिविशेषोऽस्तीति न व्यवस्था।

---

१ ०मित्येव यदिति लि० पु०। २ वा–इति मु० पु०।
३ ०श्चितमिति लि० पु०। ४ शाखास्विति नास्ति लि० पु०।
५ युक्तमिति, इत्येवमिति मु० पु०।
६ पर्यवसानमित्यत्र युक्तेवमाम्नातास्वेवेति लि० पु०।

मन्त्रादिवद्वाऽविरोधः ॥ ५४ ॥

'वा'-शब्दश्चार्थे। 'आदि'-शब्देन जातिगुणसंख्यासादृश्यक्रमद्रव्यकर्माणि गृह्यन्ते। यथा मन्त्रादीनामेकैकशाखास्वाऽऽम्नातानामपि शेषिणः क्रतोः सर्वशाखास्वेकत्वेन यथायथं श्रुत्यादिभिः सर्वासु शाखासु विनियोगो न विरुध्यते, तद्वदिहाप्यविरोधः[1] ॥

अङ्गावबद्धाधिकरणं समाप्तम् ॥ २१ ॥

---

अथ भूमज्यायस्त्वाधिकरणम् २२ ।

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥५५॥

"प्राचीनशाल औपमन्यव" इत्यारभ्य वैश्वानरविद्याऽऽम्नाता तत्र वैश्वानरः परमात्मा त्रैलोक्यशरीर उपास्यः श्रुतः स्वर्लोकादित्यवाय्वाकाशाऽप्पृथिव्यवयवः। तत्र च द्यौर्मूर्द्धा, आदित्यश्चक्षुः, वायुः प्राणः, आकाशः सन्देहः, मध्यकाय इत्यर्थः, आपो बस्तिः, पृथिवी पादावित्यवयवविशेषाः। तत्र संशयः—किमस्य त्रैलोक्यशरीरस्य व्यस्तस्योपासनं कर्तव्यमुत व्यस्तस्य समस्तस्य च, अथ[3] समस्तस्यैवेति। किं युक्तम्। व्यस्तस्येति। कुतः। उपक्रमे व्यस्तोपासनोपदेशात्। तथा ह्युपदिश्यते, औपमन्यवादयः किलोद्दालकषष्ठाः कैकेयमश्वपतिमुपसद्य "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूही"ति पप्रच्छुः, स च तेभ्यः प्रत्येकं स्वोपास्यान् द्युप्रभृतीनुक्तवद्भ्यो मूर्द्धादिषु व्यस्तेषूपासनं तत्र तत्र फलं[4] चोक्तवान् "अत्स्यन्नं पश्यसि प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते" "मूर्द्धा त्वेष आत्मन इति" एवं हि सुतेजा आत्मा वैश्वानर इत्यादिना तेषु तेषूपासनेषूपास्यस्य वैश्वानरस्य चाह[5]। अतो व्यस्तस्यैवोपासनं कर्तव्यम्। यत्तु "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति द्युप्रभृतिप्रदेशा

---

१ ०विहाप्यविरोध इति लि० पु०।

२ व्यस्तस्य समस्तस्य च पक्षेति लि० पु० नास्ति।

३ अथेति नास्ति लि० पु०। ४ फलमिति लि० पु०।

५ इत्यादि तेषूपासनेषूपास्य वैश्वानरस्य चाहेति लि० पु०।

चक्षुरादिसमाने[1] वैश्वानर उक्तस्य मूर्धाद्युपासनस्य समासेनोपसंहार इत्यवगन्तव्यम् । अपर आह—एवमेव समस्त[2]स्याप्युपासनं कार्यमिति, पृथक्फलनिर्देशात्—"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु[3] लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ती"ति । न चैतावता वाक्यभेदः । यथा भूमविद्योपक्रमे नामाद्युपासनं तत्फलं चाभि[4]धाय "एष तु वा अतिवदति यः सत्येनातिवदती"त्यादिना भूमविद्यामुपदिश्य "स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवती"ति तत्फलं च व्यपदिशति । तत्र भूमविद्यापरस्येऽपि वाक्यस्य नामाद्यवान्तरोपासनं तत्फलं चाङ्गीक्रियते,[5] तथेहापि । इत्येवं प्राप्तेऽभिधीयते—

'भूम्नः क्रतुवज्ज्यायस्त्व'मिति । भूम्नो विपुलस्य समस्तस्यैव ज्यायस्त्वं प्रामाणिकत्वमित्यर्थः, एकवाक्यत्वावगतेः । तथा हि, प्राचीनशाल औपमन्यव इत्युपक्रम्यो"द्दालको ह वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छामे"ति वैश्वानरात्मबुभुत्सयौपमन्यवादयः पञ्च महर्षयस्समुद्दालकमुपेत्य तत्र वैश्वानरात्मवेदनमलभमानास्तेन च सहाश्वपतिं कैकेयं[6] वैश्वानरात्मवेदिनमुपसङ्गम्य[7] "त्वामेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूही"ति पृष्ट्वा तत्सकाशात्परमात्मानं वैश्वानरं स्वर्लोकादिशरीरविशिष्टशरीरमुपास्यमवगम्य तत्फलं च सर्वलोकसर्वभूतसर्वात्माश्रयभूतब्रह्मानुभवमवगतवन्त इत्युपसंहारतो[8] वाक्यस्यैकत्वमवगम्यते । एवमेकवाक्यत्वेऽवगते सत्यवयवविशेषेषूपास्तिवचनं फलनिर्देशश्च समस्तोपासनैकदेशा[9]नुवादमात्रमिति निश्चीयते । 'क्रतुवत्,'[10] यथा "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जात" इति विहि-

---

१ माने—इति नास्ति लि० पु० । २ व्यस्तेत्यधिकं लि० पु० ।
३ ०यिमानं वैश्वानरमुपास्ते सर्वेष्विति मु० पु० ।
४ मभिमिस्यधिकं लि० पु० । ५ चाङ्गीक्रियत इति लि० पु० ।
६ कैकेयमिति पु० द्वयेऽपि । ७ ०क्रम्येति मु० पु० ।
८ ०संहार इति लि० पु० । ९ ०पासनैकदेशा—इति लि० पु० ।
१० क्रतुवदिति लि० पु० नास्ति ।

तस्यैव फलैकदेशा 'यदष्टाकपालो भवती'त्यादिभिरनूद्यन्ते । तथा[1] समस्तोपासनमेव न्याय्यं न व्यस्तोपासनम् । तथा हि दर्शयतीयं श्रुतिर्व्यस्तोपासनेऽनर्थं ब्रुवती—"मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य" इति, "अन्धोऽभविष्यो यन्मां नागमिष्य" इत्यादिका । अत इदमप्युपास्यम्[2]—यथा नामाद्युपासनसाम्य[3]मुक्तम् । तत्र हि नामाद्युपासनेष्वनर्थो न श्रुतः, नामाद्युपासनेभ्यो भूमोपासनस्यातिशयित[4]फलत्वं श्रुतम्—"एष तु वा अतिवदति यः सत्येनातिवदती"ति । तत[5] एव तत्र भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्युपासनानां सफलानां विवक्षितत्वम्, अन्यथाऽतिशयितफलत्वनिमित्तातिवादेन[6] भूमविद्यास्तुत्यनुपपत्तेः । अतः[7] समस्तोपासनमेव न्याय्यम् ॥

भूमज्यायस्त्वाधिकरणं समाप्तम् ॥ २२ ॥

---

अथ शब्दादिभेदाधिकरणम् २३ । नाना शब्दादिभेदात् ॥ ५६ ॥

इह ब्रह्मविद्याः सर्वा ब्रह्मप्राप्तिरूपमोक्षैकफलाः सद्विद्याभूमविद्यादहरविद्योपकोसलविद्याशाण्डिल्यविद्यावैश्वानरविद्याऽऽनन्दमयविद्याऽक्षरविद्यादिका एकशाखागताः शाखान्तरगताश्चोदाहरणम्,[8] अन्याः प्राणाद्येकविषयफलाश्च[9] । किमत्र विद्यैक्यम्, उत विद्याभेद इति संशय्यते । अत्रैवासां परस्परभेदे समर्थिते सत्येकस्या दहरविद्यादिकायाः सर्ववेदान्तप्रत्ययन्यायः । किं युक्तम् । विद्यैक्यमिति । कुतः । वेद्यस्य ब्रह्मण एकत्वात् । वेद्यं हि विद्याया रूपम् । अतो रूपैक्याद्विद्यैक्यमित्येवं प्राप्तेऽभिधीयते—

'नाने'ति । नाना भूताः विद्याः । कुतः । शब्दादिभेदात् । 'आदि'-शब्देनाभ्याससंख्यागुणप्रक्रियानामधेयानि गृह्यन्ते । शब्दान्तरा-

---

१ विहितस्य फलायैकदेशो यदष्टाकपाल इत्यादिभिरनूद्यते यथा—इति लि० पु० ।
२ इदमपोपास्यमिति लि० पु० । ३ साम्येति लि० पु० नास्ति ।
४ ०शयत्वादिति लि० पु० । ५ अत इति लि० पु० ।
६ अन्यथातिशयमिति तत्र एव भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्युपासनासफलत्वनिमित्तवादने—इति लि० पु० । ७ अत एवेति लि० पु० ।
८ ०रोदाहरणीया इति लि० पु० । ९ चकारो नास्ति लि० पु० ।

द्विभिरत्र विधेयभेदहेतवोऽनुबन्धभेदा दृश्यन्ते । यद्यपि 'वेदो''पासीते'त्यादयः शब्दाः प्रत्ययावृत्त्यभिधायिनः, प्रत्ययाश्च ब्रह्मैकविषयाः, तथाऽपि तस्य[1]कारणोदितजगदेककारणत्वापहतपाप्मत्वादिविशेषणविशिष्टब्रह्मविषयप्रत्ययावृत्त्यवबोधिनः प्रत्ययावृत्तिरूपा विद्या भिन्दन्ति । ब्रह्मप्राप्तिरूपफलसम्बन्ध्युपासनविशेषाभिधायीनि च निराकाङ्क्षाणि वाक्यानि प्रतिप्रकरणं विलक्षणविद्याऽभिधायीनीति निश्चीयते । अस्मिन्नर्थे "शब्दान्तरे कर्मभेद' इत्यादिभिः पूर्वकाण्डोदितैः सूत्रैस्सिद्धेऽपि पुनरिह प्रतिपादनं वेदान्तवाक्यान्यविधेय[2]ज्ञानपराणीति कुदृष्टिनिरसनाय । अतो विद्याभेद इति स्थितम् ॥

शब्दादिभेदाधिकरणं समाप्तम् ॥ २३ ॥

---

अथ विकल्पाधिकरणम् २४ । **विकल्पोऽविशिष्ट[3]फलत्वात् ॥ ५७ ॥**

ब्रह्मप्राप्तिफलानां सद्विद्यादहरविद्यादीनां नानात्वमुक्तम् । इदानीम्, आसां विद्यानामेकस्मिन् पुरुषे प्रयोजनवत्त्वेन समुच्चयोऽपि सम्भवत्युत प्रयोजनाभावाद्विकल्प एवेति विशये[4] किं युक्तम् । समुच्चयोऽपि सम्भवतीति[5] । कुतः । एकफलानां भिन्नशास्त्रार्थानामपि समुच्चय[6]दर्शनात् । दृश्यते ह्येकस्यैव स्वर्गादेः साधनानामग्निहोत्रदर्शपूर्णमासादीनां तस्यैव स्वर्गस्य भूयस्त्वापेक्षयैकत्र पुरुषे समुच्चयः, एवमिहापि ब्रह्मानुभवभूयस्त्वापेक्षया समुच्चयोऽपि सम्भवतीत्येवं प्राप्ते प्रचक्ष्महे–

'विकल्प' एव, न समुच्चयः सम्भवतीति । कुतः । 'अ[7]विशिष्टफलत्वात्' । सर्वासां हि ब्रह्मविद्यानामनवधिकातिशयानन्दब्रह्मानुभवः फलमविशिष्टं श्रूयते, "ब्रह्मविदाप्नोति परम्" "स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य" ।

---

१ ०पि तदिति लि० पु० ।
२ ०र्थमभिधेयेति लि० पु० ।
३ यविशिष्टेति लि० पु० ।
४ ग्रेवे–इति लि० पु० ।
५ इतिशब्दो नास्ति लि० पु० ।
६ स्वरूपेति लि० पु० ।
७ च–इति अत्र नास्ति लि० पु० ।

"यदा[1] पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैती"त्यादिभ्यः ।

ब्रह्म हि स्वस्य परस्य च स्वयमनुभूयमान[2]मनवधिकातिशयानन्दं भवति । स च तादृशो ब्रह्मानुभव एकया विद्ययाऽवाप्यते चे,त्किमन्ययेति न समुच्चयसम्भवः । स्वर्गादेर्हि देशतः कालतः स्वरूपतश्च परिमितत्वेन तत्र[3] वैशद्यापेक्षया भूयस्त्वसम्भवात्तदर्थिनः समुच्चयः सम्भवति,[4] इह तु तद्विपरीतस्वरूपे ब्रह्मणि तन्न सम्भवति । सर्वाश्च विद्या ब्रह्मा[5]नुभवविरोध्यनादिकर्माविद्यानिरसनमुखेन ब्रह्मप्राप्तिफला इत्यविशिष्टफलत्वात्सर्वासां विकल्प एव ।

ब्रह्मप्राप्तिव्यतिरिक्तफलास्तु विद्याः स्वर्गादिफलकर्मवद्यथेष्टं विकल्प्येरन् समुच्चीयेरन् वा,[6] तासां परिमितफलत्वेन भूयस्त्वापेक्षासम्भवात्, तदाह[7]—

काम्यास्तु यथाकामं समुच्चीयेरन्न वा
पूर्वहेत्वभावात् ॥ ५८ ॥

अपरिमित[8]फलत्वाभावादित्यर्थः ॥

विकल्पाधिकरणं समाप्तम् ॥ २४ ॥

---

अथ यथाश्रयभावाधिकरणम् २५ ।

अङ्गेषु यथाश्रयभावः[9] ॥ ५९ ॥

उद्गीथादिकर्माङ्गेष्वाश्रिता[10] "ओमित्येतदक्षरमुद्गीथमुपासीत"-त्यादिका विद्याः किमुद्गीथादिवत् क्रत्वर्थतया क्रतुषु नियमेनोपादेया

---

१ च यदा—इति लि० पु० ।
२ स्वरूपमनुभूयमानमिति मु० पु०, स्वयं प्रकाशमानमिति लि० पु० ।
३ तत्रादिति लि० पु० । ४ इति शब्दोऽधिको मु० पु० ।
५ ब्रह्मेति नास्ति लि० पु० । ६ विकल्प्येरन् समुच्चीयेरन् वा—इति लि० पु० ।
७ तत्राहेति लि० पु० । ८ अपरिमितेति मु० पु० ।
यथाश्रयभाव इति लि० पु० । १० कर्माङ्गे विद्याविशेषा—इति लि० पु० ।

अत गोदोहनादिवत्पुरुषार्थतया यथाकाममिति विशये[1] नियमेनोपादेया इति युक्तम्। ननु चासां पुरुषार्थत्वेनानियमः[2] प्रतिपादितः "तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः[3] फल"मित्यत्र। सत्यं तदेव द्रढयितुं कैश्चिल्लिङ्गदर्शनैर्युक्त्या चाक्षिप्यते। तत्र हि 'तेनोभौ कुरुत'-इत्यनियमदर्शनात् पृथक्फलत्वमुक्तम्। उपासनाश्रयभूतोद्गीथादिवदुपासनाना[4]मप्यङ्गतयोपादाननियमे बहवो हेतव उपलभ्यन्ते। न ह्यत्र "गोदोहनेन पशुकामस्य प्रणये"दित्यादिवदुपासनाविधिवाक्ये फलसम्बन्धः श्रूयते। "उद्गीथमुपासीते"त्युद्गीथादिसम्बन्धितयैवोपासनं प्रतीयते। "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तर"मिति वर्तमानाप[5]देशरूपवाक्यान्तराद्धि फलसम्बन्धो ज्ञायते, स्ववाक्येनैवाव्यभिचरितक्रतुसंबन्धोद्गीथादि[6]सम्बन्धेन निर्ज्ञातक्रत्वङ्गभावस्य वाक्यान्तरस्थवर्तमानफलसम्बन्धनिर्देशोऽर्थवादमात्रं स्यात्, अपापश्लोकश्रवणादिवत्। अतो यथोद्गीथादय उपासनाश्रयाः क्रत्वङ्गतया प्रयोगविधिना नियमेनोपादीयन्ते, तथा[7] तदाश्रिताश्चोपासनास्तन्मुखेन क्रत्वङ्गभूता इति नियमेनोपादेया एव।

## शिष्टेश्च ॥ ६० ॥

शिष्टिः—शासनं विधानमित्यर्थः। "उद्गीथमुपासीते"त्युद्गीथाङ्गतयोपासनविधानाच्चोपादाननियमः। "गोदोहनेन पशुकामस्य प्रणये"-दित्यादिवद्धि विधिवाक्येऽधिकारान्तराश्रवणादुद्गीथाद्यङ्गभाव एव हि विधेय इति गम्यते।

## समाहारात् ॥ ६१ ॥

"होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरती"त्युपासनस्य समाहा-

१ विषये—इति लि॰ पु॰। २ ॰र्थत्वेन नियम इति लि॰ पु॰।
३ ॰नियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्ध—इति लि॰ पु॰।
४ ॰दुपासीतानामिति लि॰ पु॰। ५ ॰मानेयेति लि॰ पु॰।
६ चापिशब्दो लि॰ पु॰ नास्ति। ७ उपादीयन्त इति लि॰ पु॰।

रनियमो दृश्यते । दुष्टमुद्गीथम्, वेदनविहीनमुद्गीथम्[1] । वेदनहानावन्येन समाधानं श्रूयते, तस्य† नियमेनोपादानं दर्शयति ।

## गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥

उपासनगुणस्य उपासनाश्रयस्य† प्रणवस्य सोपासनस्य "तेनेयं त्रयी विद्या वर्त्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायती"ति साधारण्यश्रुतेश्चोपासनसमाहारो गम्यते । तेनेति प्रकृतपरामर्शात् सोपासन एव प्रणवः सर्वत्र प्रवर्तते । अत उपासनस्य प्रणवसहभावनियमदर्शनाच्चोद्गीथाद्युपासनानामुद्गीथादिवन्नियमेनोपादानमिति प्राप्त उच्यते-

## न वा तत्सहभावाश्रुतेः ॥ ६३ ॥

न वै[2]तदस्ति यदुद्गीथाद्युपासनानां क्रतुषूद्गीथादिवदुपादाननियम इति । कुतः । 'तत्सहभावाश्रुतेः' उद्गीथाद्यङ्गभावाश्रुतेरित्यर्थः । अङ्गभावे हि सहभावनियमो भवति । यद्यप्युद्गीथमुपासीतेत्यस्मिन् पदसमुदायेऽधिकारान्तरं न[3] प्रतीयते, तथाऽपि तदनन्तरमेव "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती"ति 'विद्यायाः क्रतुवीर्यवत्तरत्वं प्रति साधनभावः'[4] प्रतिपाद्यते, तेन क्रतुफलात् पृथग्भूतफलसाधनभूता विद्योद्गीथमुपासीतेति कर्तव्यतया विधीयते । ‡क्रतुफलात् पृथग्भूतफलसाधनतयाऽवगतस्योपासनस्य‡ क्रत्वङ्गभूतोद्गीथाङ्गतया विनियोगो नोपपद्यते, अत उपासनस्याश्रयापेक्षायां सन्निहित उद्गीथ आश्रयमात्रं भवति । उद्गीथश्च क्रत्वङ्गभूत इति क्रतुप्रयुक्तोद्गीथाश्रये[5] उपासने क्रत्वधिकारिण एव क्रतोर्वीर्यवत्तरत्वेच्छानिमित्तमिदमधिकारान्तरमिति न क्रतुषु तदुपादाननियमः । वीर्यवत्तरत्वं च क्रतुफलस्य प्रबल[6]कर्मान्तरफलेनाप्रतिबन्ध इत्युक्तम्, क्रतोरविलम्बितफलत्व-

---

१ उद्गीथमिति नास्ति लि॰ पु ।  †† एतच्चिह्नान्तर्गतः पाठो लि॰ पु॰ त्रुटितः ।
२ न चै-इति मु॰ पु॰ ।  ३ नेति लि॰ पु॰ नास्ति ।
४ ०त्तरं प्रति साधनमेवेति लि॰ पु॰ ।
‡‡ एतच्चिह्नान्तर्गतः पाठो लि॰ पु॰ त्रुटितः ।
५ ०द्गीथाद्याश्रये-इति मु॰ पु । ६ कर्मान्तरेति लि॰ पु॰ ।

मित्यर्थः । पर्णतादीनां तु 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति विद्यायाः फलसाधनत्वपदपापश्लोकश्रवणादिफलं प्रति साक्षात्साधनभावो न श्रुत इति क्रत्वङ्गभूतजुह्वाद्यङ्गतया विनियोगाविरोधात्तदङ्गभूतानां[1] फलान्तरसाधनभाव[2]कल्पनानुपपत्तेस्तत्र फलश्रुतिरर्थवादमात्रं स्यात् ।

## दर्शनाच्च ॥ ६४ ॥

दर्शयति च श्रुतिरुपासनोपादानानियमम्,[3] "एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षती"ति ब्रह्मणो वेदनेन सर्वेषां रक्षणं ब्रुवत्युद्गातृप्रभृतीनां वेदनस्यानियमे सत्येतदुपपद्यते । अनेन लिङ्गेन पूर्वोक्तानां समाहारादिलिङ्गानां प्रापिकत्वमवगम्यते । अतोऽनियम एवेति स्थितम् ॥

यथाऽऽश्रयभावाधिकरणं समाप्तम् ॥ २५ ॥

---

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते शारीरकमीमांसाभाष्ये साधनाख्यस्य तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥



---

१ फलसाधनत्वविधिरिति लि॰ पु॰ । २ साधनभावेति लि॰ पु॰ ।
३ ०पादानानियममित्यर्थः लि॰ पु॰ ।

# अथ तृतीयाध्याये चतुर्थः पादः ॥

अथ पुरुषार्थाधिकरणम् १।

**पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥**

गुणोपसंहारानुपसंहारफला विद्यैकत्वनानात्वचिन्ता कृता । इदानीं विद्यातः पुरुषार्थः, उत विद्याङ्गकात्कर्मण इति चिन्त्यते । किं युक्तम् । 'अतो' विद्यातः पुरुषार्थ इति भगवान्बादरायणो मन्यते । कुतः । 'शब्दात्' । दृश्यते ह्यौपनिषदः शब्दो विद्यातः पुरुषार्थं ब्रुवन्- "ब्रह्मविदाप्नोति परम्"

"वेदाहमेतं पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात् ।
तमेवं विद्वानमृत इह भवति
नान्यः पन्था विद्यतेऽयनाय" ॥
"यथा नद्यः स्यन्दमानाः समुद्रे-
ऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः
परात्परं पुरुषमुपैति दिव्य' मित्यादिः ।

तत्र पूर्वपक्षी प्रत्यवतिष्ठते-

**शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥**

नैतदेवं यद्विद्यातः पुरुषार्थावाप्तिः शब्दादवगम्यत इति । न ह्येष "ब्रह्मविदाप्नोति पर"मित्यादिशब्दो वेदनात्पुरुषार्थावाप्तिमवगमयति, कर्मसु कर्तृभूतस्यात्मनो याथात्म्यवेदनप्रतिपादनपरत्वात् । अतः कर्तृसंस्कारद्वारेण विद्यायाः क्रतुशेषत्वात् तत्र फलश्रुतिरर्थवादमात्रम्, यथाऽन्येषु द्रव्यादिष्विति जैमिनिराचार्यो मन्यते । तदुक्तम्-"द्रव्यगुणसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्या"दिति । ननु च कर्मसु

कर्त्तुर्जीवादन्यो मुमुक्षुभिः प्राप्यतया वेदान्तेषु वेद्य उपदिश्यत इति प्रागेवोपपादितम् "नेतरोऽनुपपत्तेः" "भेदव्यपदेशाच्च" "अनुपपत्तेस्तु न शारीरः" 'इतरपरामर्शात्स इति चेन्नासम्भवा"दित्येवमादिभिः सूत्रैः, तदेव ब्रह्म तत्त्वमस्यादिसामानाधिकरण्येन जीवादनतिरिक्तमित्येतदपि "अधिकं तु भेदनिर्देशा"दित्येवमादिभिर्निरस्तम् । [1]सामानाधिकरण्यनिर्देशश्चै"तदात्म्यमिदं सर्वं" 'सर्वं खल्विदं ब्रह्मे'ति चेतनाचेतनसाधारणः 'यः पृथिव्यां तिष्ठन् य आत्मनि तिष्ठन्नित्यादिनाऽवगततत्तदात्मतयाऽवस्थितिनिबन्धन इत्य"वस्थितेरिति काशकृत्स्न" इत्यादिभिरुपपादितम्, तत्कथं कर्मसु कर्त्तुरात्मनो याथात्म्योपदेशपरा वेदान्तशब्दा इति विद्यायाः कर्माङ्गत्वं प्रतिपाद्यते । उच्यते–वेदान्तवाक्येष्वेव विद्यायाः कर्मप्राधान्यं सूचयद्भिर्लिङ्गैस्तदुपबृंहितसामानाधिकरण्यनिर्देशेन च वेदान्तशब्दा देहातिरिक्तजीवस्वरूपयाथात्म्योपदेशपरा इति बलादभ्युपगमनीयमिति पूर्वपक्षिणोऽभिप्रायः । ननु च कर्तृसंस्कारमुखेन विद्यायाः क्रत्वनुप्रवेशो न शक्यते वक्तुम्, कर्त्तुर्लौकिकवैदिकसाधारणत्वेनाव्यभिचरितक्रतुसम्बन्धित्वाभावात् । नैवम्, लौकिकस्य कर्मणः कर्त्तुर्देहाव्यतिरिक्तत्वेऽप्युपपत्तेर्देहातिरिक्तनित्यात्मस्वरूपस्य क्रतावेवोपयोगात्, तत्स्वरूपप्रतिपादनमुखेन क्रत्वनुप्रवेशो न विरुध्यते । अतो विद्यायाः क्रतुशेषत्वादतः पुरुषार्थः ।

कानि पुनस्तानि लिङ्गानि, यदुपबृंहितसामानाधिकरण्यनिर्देशेन वेदान्तशब्दा जीवस्वरूपपरा इति निर्णीयते,[3] तत्राह–

आचारदर्शनात् ॥ ३ ॥

ब्रह्मविदां प्राधान्येन कर्मस्वेवाचारो दृश्यते । अश्वपतिः केकयः[4] किलात्मवित्तमस्तद्विज्ञानायोपगतांस्तानृषीन् प्रत्याह "यक्ष्यमाणो ह वै भगवन्तोऽहमस्मी"ति । तथा च जनकादयो ब्रह्मविदग्रेसराः कर्मनिष्ठाः स्मृतिषु दृश्यन्ते–

---

१ तदेवमित्यधिकमिह लि॰ पु॰ ।   २ आत्मद्वेति लि॰ पु॰ ।
३ निर्णीयन्त इति मु॰ पु॰ ।   ४ केकय इति पु॰ द्वयेपि ।

"कर्मणैव हि संसिद्धिमास्थिता जनकादयः"

"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः" इति ।

अतो ब्रह्मविदां कर्मप्रधानत्वदर्शनाद्विद्यायाः कर्तुः स्वरूपवेदनपरत्वेन कर्माङ्गत्वमेवेति न विद्यातः पुरुषार्थः ।

निरूढमिदम्, श्रुतिरुच्यता,मित्यत्राह–

तच्छ्रुतेः ॥ ४ ॥

श्रुतिरेव हि विद्यायाः कर्माङ्गत्वमाह "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती"ति । नेयं श्रुतिः प्रकरणादुद्गीथमात्रविषयेति व्यवस्थापयितुं शक्या, यतः, प्रकरणाच्छ्रुतिर्बलीयसी । 'यदेव विद्यया करोती'ति विद्यामात्रविषया हीयं श्रुतिः ।

समन्वारम्भणात् ॥ ५ ॥

"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोः साहित्यं च दृश्यते, साहित्यं चोक्तेन न्यायेन विद्यायाः कर्माङ्गत्वे सत्येव भवति ।

तद्वतो विधानात् ॥ ६ ॥

विद्यावतः कर्मविधानाद् विद्या कर्माङ्गमित्यवगम्यते । "आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे[1] शुचौ देशे" इत्यादौ[2] वेदमधीत्येत्यध्ययनवतः कर्माणि विदधदर्थावबोधपर्यन्ताध्ययनवत एव विदधाति । अर्थावबोधपर्यन्तं ह्यध्ययनमिति स्थापितम् । अतो ब्रह्मविद्याऽपि कर्मसु विनियुक्तेति न पृथक्फलायावकल्पते ।

नियमात् ॥ ७ ॥

इतश्च न विद्यातः पुरुषार्थः । "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इत्यात्मविदः पुरुषायुषस्य[3] सर्वस्य कर्मसु नियमेन विनियोगात् कर्मण एव फलमित्यवगम्यते, विद्या तु कर्माङ्गम् ।

---

१ कुटुम्बी–इति लि॰ पु॰ । २ इत्यादीति लि॰ पु॰ ।
३ पुरुषार्थस्येति लि॰ पु॰ ।

इत्येवं प्राप्ते प्रचक्ष्महे—

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

'तु'-शब्दात्पक्षो व्यावृत्तः। विद्यात एव पुरुषार्थः। कुतः। 'अधिकोपदेशात्,' कर्मसु कर्तुर्जीवाद्धेयप्रत्यनीकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरत्वेनाधिकस्यार्थान्तरभूतस्य परस्य ब्रह्मणो वेद्यतयोपदेशात्, भगवतो बादरायणस्य विद्यातः फलमित्येवमेव मतम्। लिङ्गानि तिष्ठन्तु, वेद्यतयोपदेशस्तु तावत्[1] कर्तुः प्रत्यगात्मनोऽधिकस्यैव। कथम्। 'तद्दर्शनात्,' प्रत्यगात्मन्यशुद्धे शुद्धेऽप्यसम्भावनीयानन्तगुणाकरस्य वेद्यस्य निरस्तनिखिलहेय[2]गन्धस्य स्वसङ्कल्पकृतजगदुदयविभवलयलीलस्य सर्वज्ञस्य सर्वशक्तेर्भूम्नापरिच्छेद्यानन्दस्य जीवाधिपस्य कृत्स्नस्य[3] प्रशासितुः परस्य ब्रह्मणो वेदनोपदेशवाक्येषु दर्शनात्—"अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" "यः सर्वज्ञः सर्ववित्"

"पराऽस्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च" ॥
"स एको ब्रह्मण आनन्दः ......
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्मणो विद्वान् बिभेति कुतश्चने"ति,

"एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः"

"स कारणं करणाधिपाधिपो
न चास्य कश्चिज्जनिता न चाधिपः"

"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः।"

---

१ तद्विति लि० पु०।

२ हेयेति नास्ति लि० पु०। ३ कृतस्येति लि० पु०।

भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः ।
भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः"—

इत्यादिषु । तस्माद्वेदनोपदेशशब्देषु कर्त्तुः प्रत्यगात्मनः स्वर्गोत्तकल्पस्याविद्यादिहेयसम्बन्धयोग्यस्य गन्धोऽपि नास्तीति परमपुरुषविषयाया विद्यायास्तत्प्राप्तिरूपममृतत्वं तत्र तत्र श्रूयमाणं फलमिति विद्यातः पुरुषार्थ इति सुष्ठूक्तम् ।

लिङ्गान्यपि निरस्यन्ते—

**तुल्यं तु दर्शनम् ॥ ९ ॥**

यदुक्तम्, ब्रह्मविदां कर्मानुष्ठानदर्शनाद्विद्या कर्माङ्गमिति, तत्र,[1] विद्याया अनङ्गत्वेऽपि 'तुल्यं दर्शनम्', ब्रह्मविदां कर्मानुष्ठानदर्शनमनैकान्तिकमित्यर्थः । अननुष्ठानस्यापि दर्शनात् । दृश्यते हि ब्रह्मविदां कर्मत्यागः "ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इत्यादौ । अतो ब्रह्मविदां कर्मत्यागदर्शनाच्च विद्या कर्माङ्गम् । कथमिदमुपपद्यते—ब्रह्मविदां कर्मानुष्ठानमननुष्ठानं च । फलाभिसन्धिरहितस्य यज्ञादिकर्मणो ब्रह्मविद्याङ्गत्वात् तथाविधस्य कर्मणोऽनुष्ठानदर्शनमुपपद्यते । वक्ष्यति च "सर्वापेक्षा च[2] यज्ञादिश्रुतेरश्ववत्" इति । फलार्थस्य तस्यैव यज्ञादेः कर्मणो मोक्षैकफलब्रह्मविद्याविरोधित्वात्, तस्यैवाननुष्ठानदर्शनमुपपन्नतरम् । विद्यायाः कर्माङ्गत्वे कर्मत्यागः कथमपि नोपपद्यते ।

यदुक्तं श्रुत्यैव विद्यायाः कर्माङ्गत्वमवगम्यत इति, तत्राह—

**असार्वत्रिकी ॥ १० ॥**

न सर्वविद्याविषयेयं श्रुतिः, अपि तूद्गीथविद्याविषयैव, 'यदेव विद्यया करोती'ति यच्छब्दस्यानिर्धारितविशेषस्य 'उद्गीथमुपासीते'ति प्रस्तुतोद्गीथविशेषनिष्ठत्वात् । न हि, यत्करोति तद्विद्ययेति सम्बध्यते, यदेव विद्यया करोति तदेव वीर्यवत्तरमिति विद्यया क्रियमाणं यच्छब्देन निर्दिश्य तस्य हि वीर्यवत्तरत्वमुच्यते ।

---

१ तत्रेति मु० पु० । २ चकारो नास्ति लि० पु० ।

यच्चेदमुक्तम्–'तं विद्याकर्मणी समन्वारभेते' इति विद्याकर्मणोः साहित्यदर्शनाद्विद्या कर्माङ्गमिति, तत्राह–

## विभागः शतवत् ॥ ११ ॥

"तं विद्याकर्मणी समन्वारभेते" इत्यत्रोक्तेन न्यायेन विद्याकर्मणोर्भिन्नफलत्वाद्विद्या स्वस्मै फलाय तं[1] समन्वारभते, कर्म च स्वस्मै फलायेति 'विभागो' द्रष्टव्यः । 'शतवत्,' यथा क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्ते क्षेत्रार्थं शतं, रत्नार्थं शतमिति विभागः प्रतीयते, तथेहापि ।

## अध्ययनमात्रवतः ॥ १२ ॥

यदुक्तम्–विद्यावतः कर्मविधानाद्विद्या कर्माङ्गमिति, नैतद्युक्तम्, 'वेदमधीत्ये'त्यध्ययनमात्रवतो विधानात् । न चाध्ययनविधिरर्थावबोधे प्रवर्त्तयति,[2] आधानवदध्ययनस्याक्षरराशिग्रहणमात्रे पर्य्यवसानात् । गृहीतस्य च स्वाध्यायस्य फलवत्कर्मावबोधित्वदर्शनात्तन्निर्णयफले तदर्थविचारे पुरुषः स्वयमेव प्रवर्त्तते । ततः कर्मार्थी कर्मज्ञाने प्रवर्त्तते, मोक्षार्थी च ब्रह्मज्ञान इति न विद्या कर्माङ्गम् । यद्यप्यध्ययनविधिरेवार्थावबोधे प्रवर्त्तयति, तथाऽपि न विद्या कर्माङ्गम्, अर्थज्ञानादर्थान्तरत्वाद्विद्यायाः । यथा ज्योतिष्टोमादिकर्मस्वरूपविज्ञानात्फलसाधनभूतं कर्मा[3]नुष्ठानमर्थान्तरम्, तथाऽर्थे[4]ज्ञानस्वरूपाद्ब्रह्मस्वरूपविज्ञानादर्थान्तरमेव ध्यानोपासनादिशब्दवाच्या पुरुषार्थसाधनभूता विद्येति, न तस्याः कर्मसम्बन्धगन्धोऽपि विद्यते ।

## नाविशेषात् ॥ १३ ॥

यच्चोक्तम्–'कुर्वन्नेवेह कर्माणी'त्या[5]त्यधिदं ज्ञानाद्व्यावर्त्य[6] यावज्जीवं कर्मानुष्ठाने नियमतीति, तच्चोपपद्यते । कुतः । 'अविशेषात्' । न ह्ययं नियमः फलसाधनभूतस्वतन्त्रकर्मविषय इति विशेषहेतुरस्ति, विद्या-

१ तमिति मु० पु० नास्ति । २ प्रवर्त्ततेऽथोति मि० पु० ।
३ तत्कर्मेति मु० पु० । ४ तदर्थेति लि० पु० ।
५ इत्यादि-इति मि० पु० । ६ व्यावृत्त्येति मु० पु० ।

दूभूतकर्मविषयतयाऽप्युपपत्तेः । "कर्मणैव हि संसिद्धिमास्थिता जनकादय" इति च[1] विदुषस्त्वाऽऽप्रयाणादुपासनस्यानुवर्त्तमानत्वात् ।

एवमर्थस्वाभाव्येन चोद्यं परिहृत्य[2] 'कुर्वन्नेवेह कर्माणी'त्यस्या[3]र्थमाह—

## स्तुतयेऽनुमतिर्वा ॥ १४ ॥

'वा'-शब्दोऽवधारणार्थः । "ईशा वास्यमिदं सर्व"मिति विद्याप्रकरणाद्विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियम्,[4] विद्यामाहात्म्यात् सर्वदा कर्म कुर्वन्[5]नपि न लिप्यते कर्मभिरिति हि विद्या स्तुता भवति । वाक्यशेषश्चैतदेव[6] दर्शयति—"एवं त्वयि नान्यथेतोऽस्ति न कर्म[7] लिप्यते नरे" इति । अतो न कर्माङ्गं विद्या ।

## कामकारेण चैके ॥ १५ ॥

अपि चैवमेके शाखिनः कामकारेण[8] ब्रह्मविद्यानिष्ठस्य गार्हस्थ्यत्यागमधीयते "किं प्रजया करिष्यामो येषां नोऽयमाऽऽत्माऽयं[9] लोक" इति । विदुषो विरक्तस्य कामकारेण गार्हस्थ्यत्यागं ब्रुवदिदं वचनं ब्रह्मविद्यायाः कर्मानङ्गत्वं[10] दर्शयति । यज्ञादिकर्माङ्गत्वे हि विद्याया,[11] विद्यानिष्ठस्य कामकारेण गार्हस्थ्यत्यागो न सम्भवति । अतो न विद्या कर्माङ्गम् ।

## उपमर्दं च ॥ १६ ॥

पुण्यापुण्यरूपस्य[12] समस्तसांसारिकदुःखमूलस्य कर्मणो ब्रह्मविद्ययोपमर्दं च प्रति[13]वेदान्तमधीयते—

---

१ चकारो नास्ति लि० पु० । २ परिहृत्येति मु० पु०, ०मर्थः स्वाभाव्येन चोद्यं परिहरत्य-इति लि० पु० । ३ ०स्य वाक्यस्येति लि० पु० । ४ ०मतिरेवेति लि० पु० । ५ कर्मा कुर्वन्नपीति लि० पु० । ६ ०श्चैवमेवेति लि० पु० । ७ कर्मणेति लि० पु० । ८ कामचारेणेति लि० पु० । ९ ०मात्मा नायमिति लि० पु० । १० न कर्माङ्गत्वमिति लि० पु० । ११ विद्याया इति नास्ति लि० पु० । १२ ०रूपस्येति लि० पु० । १३ ०पमर्दे प्रतीति मु० पु० ।

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"—

इत्यादिकम्, तद्विद्यायाः कर्माङ्गत्वे न सङ्गच्छते ।

## ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

ऊर्ध्वरेतस्स्वाश्रमेषु ब्रह्मविद्यादर्शनात्तेष्वग्निहोत्रदर्शपूर्णमासादिकर्माभावाच्च न विद्या कर्माङ्गम् । नन्वूर्ध्वरेतस आश्रमा न सन्त्येव "यावज्जीवमग्निहोत्रं जुहोति"त्यादिनाग्निहोत्रदर्शपूर्णमासादीनां यावज्जीवाधिकारश्रुतेः । श्रुतिविरुद्धानां स्मृतीनां चाप्रामाण्यात् । अत आह—'शब्दे ही'ति । वैदिक एव हि शब्दे ते दृश्यन्ते "त्रयो धर्मस्कन्धाः" "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती"त्यादौ । यावज्जीवश्रुतिरुत्त्वविरक्तविषया ।

## परामर्शं जैमिनिरचोदनाचापवदति हि ॥ १८ ॥

यदिदम्—'त्रयो धर्मस्कन्धा' इत्यादौ वैदिके शब्द ऊर्ध्वरेतस आश्रमा दृश्यन्ते, अतस्ते सन्त्येवेति, नैतदुपपद्यते, यत,'त्रयो धर्मस्कन्धा' इत्येवमादिषु वाक्येषु तेषामाश्रमाणां परामर्शमात्रं क्रियते, अनुवादमात्रमित्यर्थः । कुत एतत् । 'अचोदनात्,'[१] अविधानादित्यर्थः । न ह्यत्र विधिशब्दः श्रूयते । 'त्रयो धर्मस्कन्धा' इत्यादिना हि प्रकृतं प्रणवेन ब्रह्मोपासनं स्तूयते, ब्रह्मसंस्थो ऽमृतत्वमेतीत्युपसंहारात् । अतोऽन्यार्थमनुवादमात्रमत्र[२] क्रियते तेषामाश्रमाणाम् । 'ये चेमे ऽरण्ये श्रद्धा तप इत्युपासत' इति च देवयानविधिपरत्वा,त्तत्रापि नाश्रमान्तरविधिसम्भवः । अपि च, 'अपवदति हि' श्रुतिराश्रमान्तरम्,—"वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्यादिका । अत ऊर्ध्वरेतस आश्रमा न सन्तीति जैमिनिराचार्यो मन्यते ।

## अनुष्ठेयं बादरायणस्साम्यश्रुतेः ॥ १९ ॥

१ कुतः एतदचोदनादिति लि० पु० । २ अत्रेति लि० पु० नास्ति ।

गृहस्थाश्रमवदाश्रमान्तरमप्यनुष्ठेयं भगवान् बादरायणो मन्यते । कुतः । 'साम्यश्रुतेः' । उपादेयतयाऽभिमतगृहस्थाश्रमसाम्यं हि तेषामप्याश्रमाणां श्रूयते, 'त्रयो धर्मस्कन्धा' इत्यारभ्य ब्रह्मसंस्थस्तुत्यर्थतया संकीर्तनं गृहस्थाश्रमस्येतरेषां च समानम् । अथ, गृहस्थाश्रमस्यानुवादः प्राप्तौ सत्यामेव सम्भवतीति तस्य प्राप्तिरवश्याभ्युपेत्येति मतम्, तदितरेषामपि समानम ऽन्यत्रा ऽभिनिवेशात्[1] । न च, गार्हस्थ्यधर्म एव 'यज्ञो,ऽध्ययनं, दानं, तपो, ब्रह्मचर्य'मिति सर्वैः शब्दैरभिधीयते, ब्रह्मचर्यतपसोर्गृहस्थस्यैव सम्भवादिति युक्तम्, 'त्रयो धर्मस्कन्धा' इति त्रित्वेन संख्याय 'प्रथमो द्वितीयस्तृतीय' इति विभागवचनानुपपत्तेः । अतो यज्ञोऽध्ययनं दानमिति गृहस्थाश्रम उच्यते । 'अध्ययन'–शब्दो वेदाभ्यासपरः । 'तप'–शब्देन वैखानस[2]पारिव्राज्ययोर्ग्रहणम्, उभयोस्तपःप्रधानत्वात् । तपःशब्दो हि कायक्लेशे रूढः, स च द्वयोरपि समानः । ब्रह्मचारिधर्म एव 'ब्रह्मचर्य'–शब्देनाभिधीयते । "ब्रह्मसंस्थोऽमृतत्वमेती"ति परत्र श्रूयमाणो 'ब्रह्मसंस्थ'–शब्दो यौगिकः सर्वाश्रमसाधारणः, सर्वेषामाश्रमिणां ब्रह्मसंस्थासम्भवात् । ब्रह्मणि संस्था संस्थितिर्ब्रह्मसंस्थत्वम्, सच्च सर्वेषां सम्भवत्येव । ब्रह्मनिष्ठाविकलाः केवलाश्रमिणः पुण्यलोकभाजः, तेष्वेव ब्रह्मनिष्ठोऽमृतत्वभाग्भवति । तदेतद्विस्पष्टमुक्तं भगवता पराशरेण–"प्राजापत्यं ब्राह्मणाना"मित्यारभ्य "ब्राह्मं सन्यासिनां स्मृत"मित्यन्तेन वर्णानामाश्रमाणां च केवलानां ब्रह्मलोकप्राप्त्यन्त फलमभिधाय

"एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये ।
तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरय" इति–

तेष्वेव ब्रह्मनिष्ठानां ब्रह्मप्राप्तिमभिदधता । अतो गृहस्थाश्रमतुल्या ऊर्ध्वरेतस आश्रमा अपि श्रूयन्त इति तेऽप्यनुष्ठेयाः । "ये चेमेऽरण्ये

१ समान मिमन्यत्राभिनिवेशात् इति मु० पु०, समानमन्यत्रापि निवेशादिति लि० पु० ।

२ वैखानसेति लि० पु० प्रमाद ।

श्रद्धा तप इत्युपासत" इति वाक्ये इति तपःप्रधानाश्रमप्राप्त्यपेक्षत्वाद् देवयानविधानाच्च, तत्रापि तत्प्राप्तिरङ्गीकरणीया ।

परामर्शपक्षे विधानपक्षे च गृहस्थाश्रमतुल्यमेषामप्यनुष्ठेयत्वमि- त्युपपाद्य विधिरेवायमाश्रमाणां सर्वेषां नानुवाद इत्युपपादयितुमाह—

विधिर्वा धारणवत् ॥ २० ॥

'वा'-शब्दोऽवधारणार्थः । विधिरेवायमाश्रमाणाम्, 'धारणवत्,' यथा दिष्टाग्निहोत्रे"अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयती"त्यत्रानुवादस्वरूपादपि वाक्यादुपरिधारणस्याप्राप्तत्वाद्विधिरा- श्रीयते । तदुक्तं शेषलक्षणे "विधिस्तु धारणेऽपूर्वत्वा"दिति । तथा ऽत्राप्यप्राप्तत्वाद्विधिरेवाश्रयणीयः । "ब्रह्मचर्यं समाप्य गृही भवेद् गृहाद् वनी भूत्वा प्रव्रजेत् यदि वे[1]तरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा यदहरेव विरजेत्तदहरेव प्रव्रजे"दिति जाबालानामाश्रमविधिमसन्तमिव कृत्वा एतेष्वन्यपरेष्वपि वाक्येष्वाश्रमप्राप्तिरवश्याश्रयणीयेत्युपपादितम् । एवमाश्रमान्तरविधानाद्गृहश्रुतिर्यावज्जीवश्रुतिरपवादश्रुतिश्चाविरक्तविष- या एवेति वेदितव्याः । अन्याश्च ब्रह्मविदः कर्मणामाऽऽप्रायणा[2]दव- श्यकर्तव्यताविधायिन्यः श्रुतयः स्मृतयश्च स्वस्वा[3]श्रमधर्मविषयाः ।

अत ऊर्ध्वरेतस्सु च ब्रह्मविद्याविधानाद्विद्यातः पुरुषार्थ इति सिद्धम् ॥

पुरुषार्थाधिकरणं समाप्तम् ॥ १ ॥ १०

---

अथ स्तुतिमात्राधिकरणम् २ ।

स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

इदमिदानीं चिन्त्यते "स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथ" इत्येवंजातीयकानि वाक्यानि क्रत्वङ्गभूतोद्गी-

---

१ वे-इति लि॰ पु॰ ।
२ आप्रयाणादिति पु॰ द्वयेपि ।
३ स्येति भवत् लि॰ पु॰ ।

यादिस्तुतिमात्रपराण्या,होस्विदुद्गीथादिषु रसतमादिदृष्टिविधानार्था-नीति । अत्र प्रतिपादितमुपासनपरत्वमङ्गीकृत्योपासनस्य पुरुषार्थत्वेन क्रतुषूपादानानियम उक्तः । किं युक्तम् । स्तुतिमात्रपराणीति । कुतः । उद्गीथाद्युपादानात् । क्रत्वङ्गभूतानि ह्युद्गीथादीन्युपादाय तेषां रसतमादित्वं प्रतिपादितम् । यथा जुह्वादीनां पृथिव्यादित्वं प्रतिपादयतो वचनस्य 'इयमेव जुहूः स्वर्गो लोक आहवनीय' इत्यादिकस्य तत्स्तुतिमात्रपरत्वम्, तथेहापि । तदिदमाशङ्कते–'स्तुतिमात्रमुपादानादिति चे'दिति, उद्गीथाद्युपादानात्तत्स्तुतिमात्रमेवैषां वाक्यानां विवक्षितमिति चेत्, अत्रोत्तरम्–

'नापूर्वत्वा'दिति । न स्तुतिमात्रत्वमुपपद्यते । कुतः । 'अपूर्वत्वात्'–अप्राप्तत्वात् । न ह्युद्गीथादयो रसतमादितया प्रमाणान्तरेण प्रतिपन्नाः, येन तत्प्राशस्त्यबुद्ध्युत्पत्त्यर्थं रसतमादित्वेनानूद्येरन् । न चोद्गीथादिविधिरत्र सन्निहितः, येने'यमेव जुहूः स्वर्गो लोक आहवनीय' इत्यादिवत्तदेकवाक्यत्वेन यथा कथाचिद्विधया तत्स्तुतिपरत्वमाश्रीयेत । अतः क्रतुवीर्यवत्त्वादिफलसिद्ध्यर्थमुद्गीथादिषु रसतमादिदृष्टिविधानमेव न्याय्यम् ।

भावशब्दाच्च ॥ २२ ॥

उपासीतेत्यादिभावशब्दाच्च विधिपरत्वमेव न्याय्यम्, विधिप्रत्ययुक्तो हि क्रियाशब्दो विधेयमेव स्वार्थमवगमयति । तस्मादुपासनविधानार्था एताः श्रुतयः ॥

स्तुतिमात्राधिकरणं समाप्तम् ॥ २ ॥

---

अथ पारिप्लवाधिकरणम् ३ । पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

"प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम" "श्वेतकेतुर्हारुणेय आस"इत्येवमादीनि वेदान्तेष्वाख्यानानि किं पारिप्लवप्रयोगा-

र्थो,स्युत विद्याविशेष[1]प्रतिपादनार्थानीति चिन्तायाम् "आख्यानानि शंसन्ती"त्याख्यानानां पारिप्लवे विनियोगाच्च विद्याप्रधानत्वं न्याय्यमिति चेत्,

न सर्वाण्याख्यानानि पारिप्लवप्रयोगे[2] विनियोगमर्हन्ति । कुतः । 'विशेषितत्वाद्' विनियोगस्य । 'आख्यानानि शंसन्ती'त्युक्त्वा तत्रैव "मनुर्वैवस्वतो[3] राजे"त्यादिना मन्वादीनामाख्यानानि विशेष्यन्ते । अतस्तेषामेव तत्र[4] विनियोग इति गम्यते । तस्माच्च सर्ववेदान्तेष्वाख्यानश्रुतयः पारिप्लवप्रयोगार्थाः, अपि तु विद्याविध्यर्थाः ।

## तथा चैकवाक्योपपन्धात्* ॥ २४ ॥

"आत्मा वा अरे द्रष्टव्य"इत्यादिविधिनैकवाक्यतयोपपन्धादाख्यानानां, विद्याविध्यर्थान्येव तानीति गम्यते, यथा "सोऽरोदी"दित्येवमादेः कर्मविध्यर्थत्वम्, न पारिप्लवार्थत्वम् ॥

पारिप्लवाधिकरणं समाप्तम् ॥ ३ ॥

---

अथाग्नीन्धनाधिकरणम् ४ ।

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

स्तुतिप्रसङ्गादवान्तरसङ्गतिविशेषेणार्थद्वयं चिन्तितम्, विद्यावन्त ऊर्द्ध्वरेतस आश्रमिणः सन्तीत्युक्तम्—'ऊर्द्ध्वरेतस्सु च शब्दे ही'त्यादिभिः सूत्रैः । इदानीमूर्द्ध्वरेतसो यज्ञाद्यभावात्तदङ्गिका विद्या न सम्भवतीत्याशङ्क्याह—

'अत एव चाग्नीन्धनाद्यनपेक्षे'ति ।

यत, ऊर्द्ध्वरेतस आश्रमिणो विद्यासम्बन्धित्वेन श्रुत्या परिगृह्यन्ते "ब्रह्मसंस्थोऽमृतत्वमेति[5] "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" "यदिच्छन्तो[6] ब्रह्मचर्यं चरन्ती[7]"-त्यादिश्रुत्या, अत एवोर्द्ध्वरेतस्सु विद्या ऽग्नीन्धनाद्यनपेक्षा । अग्नीन्धन-

---

१ ०विशेषार्थेति लि० पु० ।
२ ०प्रयोगेनेति मु० पु० ।
३ मनुर्वैवस्वत इति लि० पु० ।
४ सर्वेति लि० पु० ।
* एवमेव सर्वत्र पुस्तकेषु सूत्रपाठः ।
५ ०मेतीति–इति पु० द्वयेपि ।
६ प्रव्रजन्त इति लि० पु० ।
७ चरन्तीति मु० पु० ।

मन्याधानम् । आधानपूर्वका[1]ग्निहोत्रदर्शपूर्णमासादिकर्मानपेक्षा तेषु विद्या, केवलस्याश्रमविहितकर्मापेक्षेत्यर्थः ॥

अग्नीन्धनाद्यधिकरणं समाप्तम् ॥ ४ ॥

---

अथ सर्वापेक्षाधिकरणम् ५ । **सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥**

यदि विद्या यज्ञाद्यनपेक्षैवामृतत्वं साधयति, तर्हि गृहस्थस्यापि तदनपेक्षैव साधयितुमर्हति, यज्ञादिश्रुतिरपि विविदिषन्तीति शब्दात् कर्मणो वेदनाऽङ्गतां न प्रतिपादयति, अत आह—'सर्वापेक्षे'ति । अग्निहोत्रादिसर्वकर्मापेक्षैव विद्या कर्मवत्सु गृहस्थेषु । कुतः । 'यज्ञादिश्रुतेः', "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन"—इत्यादिना यज्ञादयो हि विद्याङ्गत्वेन श्रूयन्ते । यज्ञादिना विविदिषन्ति वेदितुमिच्छन्ति, यज्ञादिभिर्वेदनं प्राप्तुमिच्छन्तीत्यर्थः । यज्ञादीनां ज्ञानसाधनत्वे सत्येव यज्ञादिभिर्ज्ञानं प्राप्तुमिच्छन्तीति व्यपदेश उपपद्यते, यथाऽसेर्हननसाधनत्वे सत्यसिना जिघांसतीति व्यपदेशः । अतो यज्ञादीनां ज्ञानसाधनत्वमवगम्यते । ज्ञानं च वाक्यार्थज्ञानादर्थान्तरभूतं ध्यानोपासनादिशब्दवाच्यं विशद[2]तमप्रत्यक्षताऽऽपन्नं स्मृतिरूपं निरतिशयप्रियमहरहरभ्यासाधेयातिशयमाऽऽप्रयाणा[3]दनुवर्तमानं मोक्षसाधनमित्युक्तमस्माभिः पूर्वमेव । वक्ष्यति च "आवृत्तिरसकृदुपदेशा"दित्यादिना । एवंरूपं च[4] ध्यानमहरहरनुष्ठीयमानैर्नित्यनैमित्तिकैः कर्मभिः परमपुरुषाराधनरूपैः परमपुरुषप्रसादद्वारेण जायत इति 'यज्ञादिना विविदिषन्ती'ति शास्त्रेण प्रतिपाद्यते । अतः कर्मवत्सु गृहस्थेषु यज्ञादिनित्यनैमित्तिकसर्वकर्मापेक्षा विद्या । 'अश्ववत्'—यथा, पुरुषगमनसाधन-

---

१ ०पूर्वका-इति मु० पु० ।
२ विशदेति वि० पु० ।
३ प्रयाणादिति पु० द्वयेऽपि पुनःपुनर्भवति ।
४ चेति मु० पु० नास्ति ।

भूतोऽश्वः स्व[1]परिकरबन्धपरिकर्मापेक्षः, एवं मोक्षसाधनभूताऽपि विद्या नित्यनैमित्तिककर्मपरिकरापेक्षा । तदिदमाह स्वयमेव भगवान्—

"यज्ञदान[2]तपः कर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्" ॥

"यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति ॥

सर्वापेक्षाऽधिकरणं समाप्तम् ॥ ५ ॥

---

अथ शमदमाद्यधिकरणम् ६ ।

**शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ २७ ॥**

गृहस्थस्य शमदमादीन्यप्यनुष्ठेया,न्युत नेति चिन्तायाम्, चान्तरबाह्यकरणव्यापाररूपत्वात्कर्मानुष्ठानस्य शमदमादीनां तद्विपरीतरूपत्वाच्चाऽननुष्ठेयानीति प्राप्त उच्यते—

यद्यपि गृहस्थः करणव्यापाररूपकर्मसु प्रवृत्तस्तथाऽपि स विद्वान् शमदमाद्युपेतः स्यात् । कुतः । 'तदङ्गतया' 'तद्विधेः'—विद्याङ्गतया तेषां विधेः—"तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्ये"दिति । विद्योत्पत्तेश्चित्तसमाधानरूपत्वेन दृष्टपरिकरत्वाच्छमादीनां, विद्यानिर्वृत्तये तेषां शमादीनामवश्यानुष्ठेयत्वाच्च, तान्यप्यनुष्ठेयानि[3] । न च करणव्यापारतद्विपर्ययरूपत्वेन कर्मणां शमदमादीनां च परस्परविरोधः, भिन्नविषयत्वात्, विहितेषु करणव्यापारः, अविहितेषु प्रयोजनशून्येषु च तदुपशम इति । न च करणव्यापाररूपकर्मसु वर्तमानस्य वासनावशाच्छमादीनामुपादेयत्वासम्भवः, विहितानां कर्मणा

११ एतच्चिह्नान्तर्गतः पाठो लि॰ पु॰ त्रुटितः ।  १ स्वचेति मु॰ पु॰ ।
२ यज्ञो दानमिति । मु॰ पु॰, यज्ञदान—इति लि॰ पु॰ ।
३ शमादीनामवश्यानुष्ठेयानीति लि॰ पु॰ ।

परमपुरुषाराधनतया तत्प्रसादद्वारेण निखिलविपरीतवासनोच्छेदहेतुत्वात्। अतो गृहस्थस्य शमदमा[1]द्योऽप्यनुष्ठेयाः॥

शमदमाद्यधिकरणं समाप्तम् ॥ ६ ॥

---

अथ सर्वान्नानुमत्यधिकरणम् ७। **सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्॥२८॥**

वाजिनां छन्दोगानां च प्राणविद्यायाम्-"न ह वा अस्यानन्नं जग्धं भवति नानन्नं परिगृहीतं भवति न ह वा एवंविदि किञ्चनानन्नं भवती"ति प्राणविदः सर्वान्नानुमतिः संकीर्त्यते। किमियं सर्वान्नानुमतिः प्राणविद्यानिष्ठस्य सर्वदैव प्राणात्ययापत्तावेवेति विशये विशेषानुपादानात्सर्वदेति प्राप्त उच्यते—

'प्राणात्यय' इति। 'च'-शब्दोऽवधारणे, प्राणात्ययापत्तावेवेत्यर्थः। कुतः। 'तद्दर्शनात्'। दृश्यते ह्यन्यत्र ब्रह्मविदामपि प्राणात्ययापत्तावेव सर्वान्नाभ्यनुज्ञा, किं पुनः प्राणविदः। उषस्तिः[2] किल चाक्रायणो ब्रह्मवित्तमो मटचीहतेषु कुरुषु दुर्भिक्षदूषितेषु[3] इभ्यग्रामे वसन्नशनेन प्राणसंशयमापन्नो ब्रह्मविद्यानिष्पत्तये प्राणानामनवसादमाकाङ्क्षन्[4] इभ्यं कुल्माषान् खादन्तं भिक्षमाणस्तेन चोच्छिष्टेभ्योऽन्ये न विद्यन्त इति प्रत्युक्तः पुनरप्येतेषां मे देहीत्युक्त्वा तेन चेभ्येनोच्छिष्टेभ्य आदाय दत्तान्कुल्माषान्परिगृह्यानुपानमपि तदिभ्येनार्पितं उच्छिष्टं मे पीतं[5] स्यादिति वदंश्चाक्रायणः किमेते कुल्माषा अनुच्छिष्टा इतीभ्येन पर्यनुयुक्तो न वा अजीविष्यमिमानखादन् कामो म उदकपान[6]मिति कुल्माषखादने स्वस्य प्राणसंशयापत्तेस्तावन्मात्रखादनेन धृतप्राणस्य स्वस्योच्छिष्टोदकपानं कामकारितं निषिद्धं स्यादित्युक्त्वा स्वखादितशेषं

---

१ दमेति लि· पु· नास्ति।
२ उषस्तीति लि· पु·।
३ कुरुष्विति पुनालि· पु·।
४ आकाङ्क्षमाण इति प्रायिकः पाठ,स्तत्र ताच्छील्येऽप्यादिना चानश् द्रष्टव्यः।
५ ०मेव मे पीतमिति मु० पु०, ०मेवमिति लि· पु·।
६ उदपानमिति मु· पु·।

जायायै दत्त्वा। तया च रक्षितान्ऽपरेद्यु[1]र्याजनेनार्जिजिषया[2] जिगमिषुः पुनरपि प्राणसंशयमापन्नस्तानेवेभ्योच्छिष्टान् स्वोच्छिष्टभूतान् पर्युषितांश्चखाद। अतो ब्रह्मविदामपि प्राणसंशय एव सर्वान्नानुमतिदर्शनादत्राविशेषेण कीर्तितमपि प्राणविदः सर्वान्नीनत्वं प्राणात्ययापत्तावेवेति निश्चीयते।

## अबाधाच्च ॥ २९ ॥

"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृति"रिति ब्रह्मविद्योत्पत्त्याहारशुद्धिविधानाबाधादपि ब्रह्मविदां सर्वान्नीनत्वमापद्विषयमवगम्यते। एवं ब्रह्मविदामतिशयितशक्तीनामपि सर्वान्नीनत्वस्यापद्विषयत्वात् प्राणविदोऽल्पशक्तेः सर्वान्नानुमतिरापद्विषयैव।

## अपि स्मर्यते ॥ ३० ॥

अपि चापद्विषयमेव सर्वान्नीनत्वं ब्रह्मविदामन्येषां च स्मर्यते—

"प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसे"ति।

## शब्दश्चातोऽकामकारे ॥ ३१ ॥

अतो ब्रह्मविदामन्येषां च सर्वान्नीनत्वमापद्विषयमेव, अत एव सर्वथा'अकामकारे' 'शब्दः' कामकारस्य प्रतिषेधकः शब्दो वर्तते। अस्ति हि कठानां संहितायां कामकारस्य प्रतिषेधकः शब्दः—"तस्माद्ब्राह्मणः सुरां न पिबति[4] पाप्मना नोत्संसृजा इती"ति[5]। पाप्मना संसृष्टो[6] न भवानी[7]ति मत्वा ब्राह्मणः सुरां न पिबेदित्यर्थः॥

सर्वान्नानुमत्यधिकरणं समाप्तम् ॥ ७ ॥

---

१ रक्षितान्परेद्युरिति लि० पु०। २ आर्जिजीषयेति पु० द्वयेऽपि।
३ अथवा इति मि० पु०। ४ पिबेदिति लि० पु०।
५ "नोत्सृजा" इतीति—इति मु० पु०, नोत्संसृष्टेदितीति—इति लि० पु०।
६ इदमिति मु० पु० नास्ति, संसृष्ट इति क्वचित्।
७ भवतीति लि० पु०।

अथ विहितत्वाधिकरणम् ८। **विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥**

यज्ञादिकर्माङ्गिका प्रसविद्येत्युक्तम्। तानि च यज्ञादीनि कर्माण्यमुमुक्षुणा केवलाश्रमिणाऽप्यनुष्ठेया, न्युत नेति चिन्तायां विद्याङ्गानां सतां केवलाश्रमिशेषत्वे नित्यानित्यसंयोगविरोधः प्रसज्यत इति यज्ञादीनां केवलाश्रमधर्मत्वं न सम्भवतीति प्राप्त उच्यते—

'आश्रमकर्मापी'ति। आश्रमस्य कर्मापि भवति, केवलाश्रमिणाप्यनुष्ठेयानीत्यर्थः। कुतः। "यावज्जीवमग्निहोत्रं जुहोती"त्यादिना 'विहितत्वात्,' जीवननिमित्ततया नित्यवद्विहितत्वादित्यर्थः।

तथा, विद्याङ्गतया च 'तमेतं वेदानुवचनेने'त्यादिना विहितत्वाद्विद्याशेषतयाऽप्यनुष्ठानीत्याह—

**सहकारित्वेन च ॥ ३३ ॥**

विद्योत्पत्तिद्वारेण विद्यासहकारितयाऽप्यनुष्ठेयानि। अग्निहोत्रादीनामेव[1] जीवनाधिकारस्वर्गाधिकारवद्विनियोगपृथक्त्वेनोभयार्थत्व न विरुध्यत इत्यर्थः।

तद्वदेव कर्मान्तरत्वमपि नास्तीत्याह—

**सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३४ ॥**

सर्वथा—विद्यार्थत्वे आश्रमार्थत्वेऽपि त एव यज्ञादय इति प्रतिपत्तव्यम्, न कर्मस्वरूपभेद इत्यर्थः। कुतः। 'उभयलिङ्गात्'—उभयत्र श्रुतौ यज्ञादिशब्दैः प्रत्यभिज्ञाप्य विनियोगात्, कर्मस्वरूपभेदे प्रमाणाभावाच्च।

**अनभिभवं च दर्शयति ॥ ३५ ॥**

"धर्मेण पापमपनुदती"त्यादिभिश्च तानेव यज्ञादिधर्मान्विद्विद्यैस्तैर्विद्याया 'अनभिभवं' पापकर्मभिरुत्पत्तिप्रतिबन्धाभावं 'दर्शयति'। अहरहरनुष्ठीयमानैर्हि यज्ञादिभिर्विशुद्धे ऽन्तःकरणे प्रत्यहं प्रकृष्यमाणा विद्योत्पद्यते। 'अतस्त[2] एवोभयत्र यज्ञादयः ॥

विहितत्वाधिकरणं समाप्तम् ॥ ८ ॥

१ केवलाश्रमधर्मत्वे इति क्वचित्। २ अनिर्दिष्टेति नास्ति नि० पु०।
३ ०भिर्वेति मु० पु०।

अथ विधुराधिकरणम् ९। **अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥**

चतुर्णामाश्रमिणां ब्रह्मविद्यायामधिकारोऽस्ति, विद्यासहकारिण आश्रमधर्मा इति चोक्तम् । ये पुनराश्रमान्ऽन्तरा वर्तन्ते विधुरादयः, तेषां ब्रह्मविद्याऽधिकारोऽस्ति नेति विशये आश्रमधर्मैतिकर्तव्यताकत्वाद्विद्याया, अनाश्रमिणां चाश्रमधर्माभावान्नास्त्यधिकार इति प्राप्त उच्यते–

'अन्तरा चापि त्वि'ति । 'तु'–शब्दः पक्षव्यावृत्त्यर्थः, 'च'–शब्दोऽवधारणार्थः । अन्तरा वर्तमानानामनाश्रमिणामपि विद्यायामधिकारोऽस्त्येव । कुतः । 'तद्दृष्टेः,' दृश्यते हि रैक्वभीष्मसंवर्तादीनामनाश्रमिणामपि ब्रह्मविद्यानिष्ठत्वम् । न चाश्रमधर्मैरेव विद्याऽनुग्रह इति शक्यं वक्तुम्, "यज्ञेन दानेन तपसाऽनाशकेने"ति दानादीनामाश्रमेष्वनैकान्तिकाना[1]मप्यनुग्राहकत्वश्रवणात् । यथेष्टैस्तु विद्यानिष्ठत्वदर्शनादग्निहोत्रादिव्यतिरिक्तैरेव विद्यानुग्रहः क्रियते, तथाऽनाश्रमिष्वपि विद्यादर्शनादाश्रमानियतैर्जपोपवासदानदेवताऽऽराधनादिभिर्विद्याऽनुग्रहः शक्यते कर्तुम् ।

**अपि स्मर्यते ॥ ३७ ॥**

अपि चानाश्रमिणामपि जपादिभिरेव विद्यानुग्रहः स्मर्यते–

"जप्येनापि च संसिद्ध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यत" इति ।

संसिद्ध्येज्जपाद्यनुगृहीतया विद्यया सिद्धो भवतीत्यर्थः ।

**विशेषानुग्रहश्च ॥ ३७ ॥**

न केवलं न्यायस्मृतिभ्यामयमर्थः साधनीयः, श्रूयते चानाश्रमनियतै[2]र्धर्मविशेषैर्विद्यानुग्रहः–"तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्ये"दिति[3] ।

**अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥**

---

१ ०ष्वनैकान्तानामिति मु० पु० ।
२ ०र्नियतैरिति लि० पु० ।
३ ०मन्विष्येति–इति लि० पु० ।

'तु'-शब्दोऽवधारणे। 'अतो'ऽनाश्रमित्वा'दितर'दाश्रमित्वमेव'ज्यायः', अनाश्रमित्वमापद्विषयम्,[1] शक्तस्य चाश्रमित्वमेवो[2]पादेयमित्यर्थः। भूयोधर्मकाऽल्पधर्मकयोरतुल्यकार्यत्वात्। 'लिङ्गाच्च', स्मृतेरित्यर्थः। स्मर्यते च शक्तं प्रत्याश्रमस्योपादेयत्वम्—"अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विज" इत्यादिना। निवृत्तब्रह्मचर्यस्य मृतभार्यस्य चावैराग्ये सति दारा लाभ आपत् ॥

विधुराधिकरणं समाप्तम् ॥ ९ ॥

---

अथ तद्भूताधिकरणम् १०।

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥**

नैष्ठिकवैखानसपरिव्राजकाश्रमेभ्यः प्रच्युतानामपि ब्रह्मविद्यायामधिकारोऽस्ति नेति चिन्तायां विधुरादिवदनाश्रमैकान्तैर्दानादिभिर्विद्यानुग्रहसम्भवादस्त्यधिकार इति प्राप्त उच्यते।

'तद्भूतस्य तु नातद्भाव' इति। 'तु'-शब्दः पक्षव्यावृत्त्यर्थः। 'तद्भूतस्य' नैष्ठिकाद्याश्रमनिष्ठस्य 'नातद्भावः'—प्रच्यवाभावोऽनाश्रमित्वेनावस्थानं न सम्भवति। कुतः। 'तद्रूपाभावेभ्यो नियमात्,' तद्रूपाणि[3] तेषां नैष्ठिकादीनां रूपाणि वेषा धर्मा इत्यर्थः। तेषामभावास्तद्रूपाभावाः, तेभ्यः शास्त्रैर्नियमात्। नैष्ठिकाद्याश्रमं प्रविष्टानामाश्रमधर्मनिवृत्तिभ्यो नियच्छन्ति हि शास्त्राणि—"ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादय"न्निति, "अरण्यमियात्ततो न पुनरेया"दिति च, "संन्यस्याग्निं न पुनरावर्तये"दिति च[4]। अतो विधुरादिवन्नैष्ठिकादीनामनाश्रमित्वेनावस्थानासम्भवाच्च तानधिकरोति ब्रह्मविद्या। जैमिनेरपीत्यविगानं दर्शयन् स्वाभिमतं द्रढयति।

---

१ ०द्विषये—इति मि० पु०। २ चाश्रमस्थमेवो—इति मि० पु०।
†† प्रसाद्वशाभ्यागत० पाठो मि० पु० त्रुटितः।
३ तद्रूपाणीति मि० पु० नास्ति। ४ चकारो नास्ति मि० पु०।

अथ स्यात्, नैष्ठिकादीनां ब्रह्मचर्य्यात् प्रच्युतानां प्रायश्चित्तादधिकारः सम्भवति, अस्ति च प्रायश्चित्तमधिकारलक्षणे निरूपितम्—"अवकीर्णिपशुश्च[1] तद्व"दिति । अतः प्रच्युतब्रह्मचर्य्यस्य प्रायश्चित्तसम्भवात् कृतप्रायश्चित्तो ब्रह्मविद्यायामधिकरिष्यतीति, तत्राह—

### न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥

अधिकारलक्षणोक्तमपि प्रायश्चित्तं नैष्ठिकादीनां तेषां भ्रष्टानां न सम्भवति । कुतः । 'पतनानुमानात् तदयोगात्,' नैष्ठिकादीनां प्रच्युतानां पतनस्मृतेस्तस्य प्रायश्चित्तस्यासम्भवात्,

"आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः[2] ।
प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महे"ति ।

अतोऽधिकारलक्षणोक्तं प्रायश्चित्तमितरब्रह्मचारिविषयम् ।

### उपपूर्वमपीत्येके[3] भावमशनवत्तदुक्तम् ॥ ४२ ॥

नैष्ठिकादीनां ब्रह्मचर्य्यप्रच्यवनम् 'उपपूर्व'मुपपातकम्, महापातकेष्वपरिगणितत्वा[4]दिति तत्र प्रायश्चित्तस्य 'भाव' विद्यमानतामप्येके आचार्या मन्यन्ते । 'अशनवत्,' यथा मध्वशनादिनिषेधस्तत्प्रायश्चित्तं चोपकुर्वाणस्य नैष्ठिकादीनां च समानम् । 'तदुक्त'स्मृतिकारैः—"उत्तरेषाञ्चैतदविरोधी"ति, गुरुकुलवासिनो यदुक्तम् तत्स्वाश्रमाविरोध्युत्तरेषामप्याश्रमिणां सम्भवतीत्यर्थः । तद्वदिहापीति ब्रह्मचर्य्यप्रच्यवने प्रायश्चित्त[5]सम्भवाद्ब्रह्मविद्यायोग्यताऽप्यस्ति ।

### बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ४३ ॥

'तु'-शब्दो मतान्तरव्यावृत्त्यर्थः । उपपातकत्वे महापातकत्वेऽप्येते बहिर्भूता एव ब्रह्मविद्याऽधिकारिभ्यः, ब्रह्मविद्यायामनधिकृता इत्यर्थः । कुतः । 'स्मृतेः,' पूर्वोक्तात् पतनस्मरणात् । यद्यपि कलुषनि-

१ कीर्णी प्रच्युतश्चेति लि० पु० । २ पुनरिति द्विज इति च क्वचित् ।
३ ०मपि त्येक इति क्वचित्पठ्यते न तु तथा श्रीभाष्यादिसंमतम् ।
४ ०गणितत्वादिति मु० पु० । ५ ०कृत्या इति लि० लि० पु० ।
६ कल्पत्वेति लि० पु० ।

हरणाय केश्चिद्वचनैः प्रायश्चित्ताधिकारो[1] विद्यते, तथाऽपि कर्माधिकारानुगुणशुद्धिहेतुप्रायश्चित्तं न सम्भवति, "प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महे"ति स्मृतेरित्यर्थः । 'आचाराच्च'—शिष्टा हि नैष्ठिकादीन्भ्रष्टान् कृतप्रायश्चित्तानपि वर्जयन्ति, तेभ्यो ब्रह्मविद्यादिकं नोपदिशन्ति । अतस्तेषां नास्ति ब्रह्मविद्यायामधिकारः ॥

तद्भूताधिकरणं समाप्तम् ॥ १० ॥

—:o:—

अथ स्वाम्यधिकरणम् ११ । **स्वामिनः फलश्रुतेरित्यात्रेयः ॥४४॥**

कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि किं यजमानकर्तृकाणि, उत ऋत्विक्कर्तृकाणीति चिन्तायां यजमानकर्तृकाणीत्यात्रेयो मन्यते । कुतः । 'फलश्रुतेः,' वेदान्तविहितेषु दहराद्युपासनेषु फलोपासनयोरेकाश्रयत्वदर्शनात्, इह च क्रतुफलातिरिक्तफलस्योद्गीथोपासनफलस्य यजमानाश्रयत्वश्रवणादित्यर्थः । न च गोदोहनादिवदङ्गाश्रयत्वेन यजमानकर्तृकत्वासम्भवः, गोदोहनादिषु ह्याध्वर्युकर्तृकप्रणयनाश्रयगोदोहनोपादानं[*]मन्येनाशक्यम्, इह तूद्गातृकर्तृकेऽप्युद्गीथे तस्योद्गीथादे रसतमत्वानुसन्धानं यजमानेनैव[3] कर्तुं शक्यत इति प्राप्तेऽभिधीयते—

**आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते[4] ॥ ४५ ॥**

'आर्त्विज्य'मृत्विजः कर्मोद्गीथाद्युपासनमित्यौडुलोमिराचार्यो मन्यते । कुतः । 'तस्मै हि' प्रयोजनायर्त्विक् 'परिक्रीयते,' फलसाधनभूतस्य साङ्गस्य क्रतोरुपादानायेत्यर्थः । कर्मविधिषु "ऋत्विजो वृणीते" "ऋत्विग्भ्यो दक्षिणां ददाती"ति ऋत्विक्कर्तृकत्व[5]श्रवणेन फलसाधनभूतं साङ्गं कर्म ऋत्विग्भिरनुष्ठेयमित्यवगम्यते । तदन्तर्गतानि कायिकानि मानसानि च कर्माणि ऋत्विक्कर्तृकाण्येव । न च शक्त्यशक्ती तस्य निबन्धनम् ।

१ वचनैरधिकार इति लि० पु० । २ ०कर्तृकाणीति लि० पु० ।
* ० दोहनोपादानमेव सर्वपु. पाठः ।
३ ०रसतमत्वानुसंधाध्य म ( संधानं ) यजमानेन--इति लि० पु० ।
४ परिक्रियत इति भूयिष्ठेषु मु० पु० । ५ ०त्वमिति लि० पु० ।

यज्ञाप्युद्गीथाद्युपासनं पुरुषार्थः, तथाऽपि क्रत्वधिकृताधिकारित्वात्[1] क्रतोरङ्ग माहात्म्य ऋत्विक्कर्तृकत्वात् "यदेव विद्यया करोति तदेव वीर्यवत्तर"मित्युद्गीथादेः ऋत्विक्कर्तृकक्रियोपयोगित्वेन विद्यायास्तदेककर्तृकत्वश्रवणादृत्विक्कर्तृकाण्येतानि । दहराद्युपासनेषु ऋत्विक्कर्तृकत्वाश्रवणात्, "शास्त्रफलं प्रयोक्तरी"ति न्यायाच्च फलिकर्तृकत्वमेव ॥*

स्वाम्यधिकरणं समाप्तम् ॥ ११ ॥

---

अथ सहकार्यन्तरविध्यधिकरणम् १२ ।

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥

"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यं च पाण्डित्यं च[2] निर्विद्याथ मुनि"रित्यत्र बाल्यपाण्डित्यवन्मौनमपि विधीयत, उतानूद्यत इति विषये, मौनपाण्डित्यशब्दयोर्ज्ञानार्थत्वात्पाण्डित्यं निर्विद्येति विहितमेव ज्ञान'मथ मुनि' रित्यनूद्यते । विधिशब्दो न ह्यत्र श्रूयते । इत्येवं प्राप्ते ब्रूमः—

'सहकार्यन्तरविधि'रिति । 'तद्वतो'—विद्यावतः 'विध्यादिवत्,' विधीयत इति विधिर्यज्ञादिः सर्वाश्रमधर्मः, शमदमादयश्च 'विधि'—शब्देनोच्यन्ते, आदिशब्देन श्रवणमनने गृह्येते । 'सहकार्यन्तरविधि'रित्यत्रापि विधीयत इति विधिः, सहकार्यन्तरं विधिश्चेति सहकार्यन्तरविधिः । एतदुक्तं[3] भवति—यथा[4] "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेने"त्यादिना 'शान्तो दान्त" इत्यादिना च सहकारी यज्ञादिः शमदमादिश्च विधीयते यथा च "श्रोतव्यो मन्तव्य" इति[5] श्रवणमनने चार्थप्राप्ते विद्यासहकारित्वेन गृह्येते, तथा "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्ये"त्यादिना पाण्डित्यं बाल्यं मौनमिति त्रितयं विद्यायाः सहकार्यन्तरं

---

* स्व ..धिकारत्वादिति पु० द्वयेऽपि ।
[1] क्रतोश्चेति सूत्रं तु न श्रीभाष्यादिपरिगृहीतम् ।
[2] चैतत् बाल्यं चेति लि० पु० ।  [3] तदुक्तमिति लि० पु० ।
[4] यथा-शब्दोऽयमिति मु० पु० ।  [5] इत्यत्रेति लि० पु० ।

विधीयत इति । मौनं च पाण्डित्यादर्थान्तरमित्याह—'पक्षेणे'ति । 'मुनि'-शब्दस्य पक्षेण प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनान्मौनं[1] पाण्डित्य-बाल्ययोर्द्वयोस्तृतीयम् । यद्यप्य'थ मुनि'रित्यत्र विधिप्रत्ययो न श्रूयते तथाऽपि मौनस्या'प्राप्तत्वाद् विधेयत्वमङ्गीकरणीयम्—अथ मुनिः 'स्या'-दिति । एवं च मौनं श्रवणप्रतिष्ठार्थान्मननादर्थान्तरभूतमुपासनात्मक-ज्ञानस्य पुनःपुनःसंशीलनं तद्भावनारूपम् । तदेवं वाक्यार्थः—'ब्राह्मणो' विद्वान् 'पाण्डित्यं निर्विद्य' उपास्यं ब्रह्मतत्त्वं परिशुद्धं परिपूर्णं[5] च विदित्वा,[3] श्रवणमननाभ्यां प्राप्तं[4] वेदनं प्रतिलभ्येत्यर्थः । तच्च भगवद्-भक्तिसंस्कृतविशुद्धिकृतम्, यथोक्तम्—"नाहं वेदै"रित्यारभ्य "भक्त्या त्वनन्यया शक्यो··ज्ञातु"मिति । श्रुतिश्च "यस्य देवे परा भक्तिः" "नायमात्मा प्रवचनेन लभ्य" इत्यादिका । 'बाल्येन तिष्ठासेत्,' बाल्य-स्वरूपं चानन्तरमेव वक्ष्यते । 'बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः स्यात्, बाल्यपाण्डित्ये यथावदनुष्ठाय परिशुद्धे परे[†] ब्रह्मणि मननशीलो भवेद्विविदिषाजननरूपविद्याऽऽशाप्तये । एवं त्रितयोपादानेन लब्धविद्यो भवतीत्याह 'अमौनं मौनं[6] च निर्विद्याथ ब्राह्मणः' इति । अमौनं मौनेतर-सहकारिकलापः, तं च मौनं च यथावदुपाददानो विद्याकाष्ठां तदेकनि-ष्पाद्यां लभेतेत्यर्थः । 'स ब्राह्मणः केन स्या'दिति, उक्तादुपायादस्मि-न्योऽप्युपायोऽस्तीति पृष्टे 'येन स्यात्तेनेदृश एवे'ति, येन मौनपर्यन्तेन[7] ब्राह्मणः स्यादित्युक्तम्, तेनैवेदृशः स्यात्, न केनाप्यन्येनोपायेनेति परि-हृतम् । अतः सर्वेष्वाश्रमेषु स्थितस्य विदुषो यज्ञादिस्वाश्रमधर्मवत् पाण्डित्यादिकं मौनतृतीयं विद्यायाः सहकार्यन्तरं विधीयते ।

अथ स्यात्—यदि सर्वेष्वाश्रमेषु स्थितानां विदुषां तत्तदाश्रमधर्म-सहकारिणी मौनतृतीयप्रविधा विद्या ब्रह्मप्राप्तिसाधनमुच्यते, कथं

१ मौनमिति मु० पु० । २ प्रकृष्टमननशीलेति लि० पु० ।

† इतःप्रभृतिस्थानं यावत् काशीकराजकीयसंस्कृतपाठशालीयं लिखितपुस्तकं 'लि० पु०' संकेतितं समाप्तम् । अथेतः परं लिखितपुस्तकान्तराभावाद् पाठभेदा 'अ० मु०' संकेतेन पदेऽपदेऽपि व्यवह्रियन्ते इति द्रष्टव्यम् ।

३ विदुषेति अ० पु० । ४ प्राप्यमिति अ० ।

५ परिपूर्णं—इति मु० पु० । ६ मौनमिति नास्ति अ० । ७ पर्यन्ते येति अ० ।

तर्हि छान्दोग्ये "ऽभिसमावृत्य कुटुम्बे शुचौ देशे" इत्यारभ्य "स खल्वेवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्त्तते" इति यावदायुषं गार्हस्थ्यधर्मेण स्थितिदर्शनमुपपद्यते—इत्यत्राह—

कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥

'तु'-शब्दश्चोद्यं व्यावर्त्तयति । 'कृत्स्नभावात्'—कृत्स्नेषु भावात् कृत्स्नेष्वाश्रमेषु विद्यायाः सद्भावात् गृहिणोऽप्यस्तीति तेनोपसंहारः, तस्मात्सर्वाश्रमधर्मप्रदर्शनार्थो गृहिणोपसंहार इत्यभिप्रायः ।

तथैतस्मिन्नपि वाक्ये "ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं[२] चरन्ती"ति पारिव्राज्यैकान्तधर्मं प्रतिपाद्य "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य" इत्यादिना पारिव्राज्यधर्मस्थितिहेतुकमौनतृतीयसहकारिविधानं प्रदर्शनार्थमित्याह—

मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

सर्वैषणाविनिर्मुक्तस्य भिक्षाचरणपूर्वकमौनोपदेशः सर्वेषामाश्रमधर्माणां प्रदर्शनार्थः । कुतः । एवंविधमौनोपदेशवदितरेषामाश्रमि[१]धर्माणामपि "त्रयो धर्मस्कन्धा" इत्यारभ्य "ब्रह्मसंस्थोऽमृतत्वमेती"ति ब्रह्मप्राप्त्युपदेशात् । उपपादितश्च पूर्वमेव 'ब्रह्मसंस्थ'-शब्दः सर्वाश्रमिसाधारण इति । अतः सुष्ठूक्तम्—यज्ञादिसर्वाश्रमधर्मवन्मौनतृतीयः पाण्डित्यादिविद्यासहकारित्वेन विधीयत इति ॥

सहकार्यन्तरविध्यधिकरणं समाप्तम् ॥ १२ ॥

---

अथानाविष्काराधिकरणम् १३ ।

अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥

"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासे"दित्यत्र विदुषो बाल्यमुपादेयतया श्रुतम् । बालस्य भावः कर्म वा बाल्यम्,

---

१ धर्मशब्दो परतस्सर्वत्रैव मु० पु० प० च परस्परमेव भवति, म ▯ तयोपनिषदि म चाऽनुशासनिकम् ।

२ ०माचर्येति प० ।

बालभावस्य वयोऽवस्थाविशेषस्यानुपादेयत्वात् कर्म्मैवेह गृह्यते । तत्र किं बालस्य कर्म्म कामचारादि सर्वं विदुषोपादेयमुत दम्भादिरहितत्वमेवेति विशये विशेषाभावात्सर्वमुपादेयम् । नियमशास्त्राणि च विशेषविधिनाऽनेन बाध्यन्त इत्येवं प्राप्तेऽभिधीयते—

"अनाविष्कुर्व"न्निति । बालस्य यत्स्वभावाऽनाविष्कारो[1]रूपं कर्म्म, तदुपाददानो वर्तेत विद्वान् । कुतः । 'अन्वयात्'—तस्यैवान्वयात् । 'बाल्येन तिष्ठासे'दित्यस्मिन् विधौ तस्यैव ह्यन्वयसम्भवः[2], इतरेषां विद्याविरोधित्वप्रत्ययात्—

"नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्" ॥

"आहारशुद्धौ सत्त्वशुद्धि"रित्यादिषु ॥

अनाविष्काराधिकरणं समाप्तम् ॥ १३ ॥

---

ऐहिकाधिकरणम् १४ । **ऐहिकमप्रस्तुतप्रतिबन्धे[3] तद्दर्शनात् ॥५०॥**

द्विविधा विद्याऽभ्युदयफला मुक्तिफला च । तत्राभ्युदयफला स्वसाधनभूतैः पुण्यकर्म्मभिः पुण्यकर्म्मानन्तरमेवोत्पद्यत, उतानन्तरं कालान्तरे वेत्यनियम इति संशयः । पूर्वकृतैः पुण्यकर्म्मभिर्हि[4] विद्वान् जायते, यथोक्तं भगवता—"चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुने"ति । साधने निर्वृत्ते[5] विलम्बहेत्वभावादनन्तरमेवेति प्राप्त उच्यते—

ऐहिकमप्रस्तुतप्रतिबन्ध इति । ऐहिकमभ्युदयफलमुपासनमप्रस्तुतप्रतिबन्धे अप्रस्तुते प्रबलकर्म्मान्तरप्रतिबन्धे सत्यनन्तरम्, प्रतिबन्धे सति तदुत्तरकालमित्यनियमः । कुतः । 'तद्दर्शनात्,' दृश्यते हि प्रबलेन कर्म्मान्तरेण कर्म्मफलप्रतिबन्धाभ्युपगमः श्रुतौ—"यदेव विद्यया करोति

---

१ ०विष्कारेति मु० पु० ।
२ ०सम्भवादिति प्र० ।
३ ०धीत्यधिकं प्र० ।
४ ०कर्म्मभिरितीति प्र० ।
५ निवृत्त इति प्र० ।

श्रद्धयोपनिषदा तदेव वीर्य्यवत्तर"मित्युद्गीथविद्यायुक्तस्य कर्म्मणः फलप्रतिबन्धश्रवणात् ॥

ऐहिकाधिकरणं समाप्तम् ॥ १४ ॥

अथ मुक्तिफलाधिकरणम् १५ । **एवं मुक्तिफलानियमस्तदवस्थाऽवधृतेस्तदवस्थाऽवधृतेः ॥ ५१ ॥**

मुक्तिफलस्याप्युपासनस्य स्वसाधनभूतैर्निश्चयितकर्म्मभिरुत्पत्तावेवमेव कालानियमः, तस्याऽपि पूर्ववत्प्रतिबन्धाभावप्रतिबन्ध[1]कपावस्यावधृतेः । अत्रापि तस्य हेतोः समानत्वादित्यर्थः । सर्वेभ्यः कर्म्मभ्यो मुक्तिफलविद्यासाधनस्य कर्म्मणः प्रबलस्याप्रतिबन्धासम्भव इत्यधिकाऽऽशङ्का, तत्रापि ब्रह्मविद्वचाराणां न पूर्वैहसानां प्रबलानां सम्भवात् प्रतिबन्धसम्भव इति परिहारः । द्विरुक्ति[2]रध्यायपरिसमाप्तिं द्योतयति ॥

मुक्तिफलाधिकरणं समाप्तम् ॥ १५ ॥

इति श्रीमद्भगवद्रामानुजाचार्य्यविरचिते शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य चतुर्थः पादः समाप्तः ॥

**समाप्तश्चायं साधनाध्यायस्तृतीयः ॥**



१ प्रमाणोत्पत्तिक्रमश्च मु० पु०, द्वि० च । २ पुनरुक्तिरिति ग० ।

नमो मीमांसाद्वयगुरवे भगवते श्रीमते रामानुजाचार्याय ॥

अथ

# चतुर्थोऽध्यायः ॥

अथाऽऽवृत्त्यधिकरणम् १। **आवृत्तिरसकृदुपदेशात् ॥ १ ॥**

तृतीयेऽध्याये साधनैः सह विद्या चिन्तिता । अथेदानीं विद्यास्वरूपविशोधनपूर्वकं विद्याफलं चिन्त्यते ।

तत्र "ब्रह्मविदाप्नोति परम्" "तमेव[1] विदित्वाऽतिमृत्युमेति" 'ब्रह्म वेद ब्रह्मैव भवति" "यदा पश्यः पश्यते रुक्मवर्णम्"मित्यादिवेदान्तवाक्येषु ब्रह्मप्राप्तिसाधनतया विहितं वेदनं किं सकृत्कृतमेव शास्त्रार्थ, उताऽसकृदावृत्त[2]मिति संशयः । किं युक्तम् । सकृत्कृतमिति । कुतः । 'ब्रह्म वेद ब्रह्मैव भवती'ति वेदनमात्रस्यैव विधानादसकृदावृत्तौ प्रमाणाभावात् । न चावघातादिवद्वेदनस्य ब्रह्मापारोक्ष्यं[3] प्रति दृष्टोपायत्वाद् यावत्कार्यमावृत्तिरिति वक्तुं शक्यम्, वेदनस्य दृष्टोपायत्वाभावात् । ज्योतिष्टोमादिकर्मवद्धि वेदान्तविहितं च वेदनं परमपुरुषाराधनरूपम्, आराधिताच्च परमपुरुषाद् धर्मार्थकाममोक्षाख्यपुरुषार्थावाप्तिरिति हि "फलमत उपपत्ते"रित्यत्र प्रतिपादितम् । अतो ज्योतिष्टोमादिवच्छाब्दं सकृत्कृतमेव शास्त्रार्थ इति प्राप्ते प्रचक्ष्महे—

'आवृत्तिरसकृ'दिति । असकृदावृत्तमेव वेदनं शास्त्रार्थः । कुतः । 'उपदेशात्,' ध्यानोपासनपर्यायेण वेदनशब्देनोपदेशात्[4] । तत्पर्यायत्वं च विद्युपास्तिध्यायतीनामेकस्मिन् विषये वेदनो[5]पदेशपरवाक्येषु प्रयोगादवगम्यते । तथा हि, "मनो ब्रह्मेत्युपासीत" इत्युपासिनोपक्रान्तेऽर्थे

१ ०मेवमिति मु० पु० । २ ०दावर्त्तनमिति प० ।
३ ब्रह्मापरोक्ष्यमिति मु० पु० । ४ वेदनोपदेशादिति क्वचित् ।
५ वेदनोप–दर्शनम् छ नास्ति ।

'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेदे"ति विदिनोपसंह्रियते । तथा, "यस्तद्वेद यत्स वेद स मयैतदुक्त" इत्युपक्रमे विदिनोक्तं रैक्वस्य ज्ञानम् "अनु म एतां भगवो देवतां शाधि यां देवतामुपास्स" इत्युपासिनोपसंह्रियते । तथा, "ब्रह्मविदाप्नोति पर" मित्यादिवाक्यसमानार्थेषु वाक्येषु "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "ततस्तु तं पश्यते निष्कलं ध्यायमान" इत्यादिषु ध्यायतिना वेदनमभिधीयते । ध्यानं च चिन्तनम्, तच्च[1] स्मृतिसन्ततिरूपम्, न स्मृतिमात्रम् । उपास्तेरपि तदेकार्थः, एकाग्रचित्तवृत्तिनैरन्तर्ये प्रयोगदर्शनात् । तदुभयैकार्थ्यादसकृदावृत्तसन्ततस्मृतिरिह "ब्रह्म वेद ब्रह्मैव भवति" "ज्ञात्वा देवं मुच्यते सर्वपाशै[2]"रित्यादिषु वेदनादिशब्दैरभिधीयत इति निश्चीयते ।

लिङ्गाच्च ॥ २ ॥

लिङ्गं—स्मृतिः । स्मृतेश्चायमर्थोऽवगम्यते । स्मर्यते हि मोक्षसाधनभूतं वेदनं स्मृतिसन्ततिरूपम्—

"तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिःस्पृहा ।
तद्ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथे[3]"ति ।

तस्मादसकृदावृत्तमेव वेदनं शास्त्रार्थः ॥

आवृत्त्यधिकरणं समाप्तम् ॥ १ ॥

---

अथाऽऽत्मत्वोपासनाधिकरणम् ३ । आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥३॥

इदमिदानीं चिन्त्यते—किमुपास्यं ब्रह्मोपासितुरन्यत्वेनोपास्य,-मुतोपासितुरात्मत्वेनेति । किं युक्तम् । अन्यत्वेनेति । कुतः । उपासितुः प्रत्यगात्मनोऽर्थान्तरत्वाद् ब्रह्मणः । अर्थान्तरत्वं चा"धिकन्तु भेदनिर्दे-

---

१ तच्चात्र चिन्तनमित्येव प. ।
२ ०पाशैरिति प ।
३ तथेति प ।

र्थात्" "अधिकोपदेशात्" "नेतरोऽनुपपत्ते"रित्यादिषूपपादितम् । यथावस्थितञ्च ब्रह्मोपास्यम् । अयथावस्थितोपासने हि ब्रह्मप्राप्तिरप्ययथाभूता स्यात्, "यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति न्यायात् । अतोऽन्यत्वेनोपास्यमित्येवं प्राप्तेऽभिधीयते—

'आत्मेति त्वि'ति । 'तु'-शब्दोऽवधारणे । उपासितुरात्मेत्येवोपास्यम् । उपासितुः प्रत्यगात्मा स्वशरीरस्य यथाऽऽत्मा, तथा स्वात्मनोऽपि परं ब्रह्मात्मेत्येवोपासीतेत्यर्थः । कुतः । यतमभ्यु¹पगच्छन्ति पूर्वे उपासितारः, "त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसी"ति । उपासितुरर्थान्तरभूतं ब्रह्मोपासितारो'ऽह'मिति कथमभ्युपगच्छन्तीत्यत आह 'ग्राहयन्ति चे'ति । इममर्थमविदुषुपासितॄन् ग्राहयन्ति शास्त्राणि, तान् प्रत्युपपादयन्तीत्यर्थः, "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृत" इति, तथा "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः· ऐतदात्म्यमिदं सर्व'मिति, "सर्वं खल्विदं ब्रह्म तज्जला"निति च सर्वस्य चिदचिद्वस्तुनः तज्जत्वात्तल्लत्वात्तदनत्वात्तन्नियाम्यत्वात्तच्छरीरत्वाच्च सर्वस्यायमात्मा, अतः स त आत्मा । अतो यथा प्रत्यगात्मनः स्वशरीरं प्रत्यात्मत्वाद्देवोऽहं मनुष्योऽहमित्यनुसन्धानम्, तथा प्रत्यगात्मनोऽप्यात्मत्वात्परमात्मनः, तस्याप्यहमित्येवानुसन्धानं युक्तमिति । एवं शास्त्रोपपादितं सर्वबुद्धीनां ब्रह्मैकनिष्ठत्वेन* सर्वशब्दानां ब्रह्मैकनिष्ठत्वमभ्युपगच्छन्त 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते"—इति व्यतिहारेणो²पयन्तः । एवं च "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद" "अकृत्स्नो ह्येष आत्मेत्येवोपासीत" "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" इत्यन्यत्वानुसन्धाननिषेध,³ "पृथगात्मानं प्रेरितारं च मत्वे" ति पृथक्त्वानुसन्धानविधानं

१ यत्र तु—इति च   * ०निष्ठत्वे इति द्वि ।
२ व्यतिकरेणेति पुस्तकान्तरे, व्यतिरेकेणेति तु च ।
३ एवं वेदेत्यात्मत्वानुसंधाननिषेध इति क्वचित् ।

चाभिहितम् । अहमिति स्वात्मतयाऽनुसन्धानादन्यत्वानुसन्धाननिषेधो दर्शितः, स्वशरीरात् स्वात्मनोऽधिकस्यानुसन्धानवत्स्वात्मनोऽपि परमात्मनोऽधिकत्वानुसन्धानात्पृथक्त्वानुसन्धानविधानं च दर्शितम् । अधिकस्य ब्रह्मणः प्रत्यगात्मन आत्मत्वात्तस्य च ब्रह्मशरीरत्वादिविधवाक्ये'ऽहमस्मीत्येव' इत्युक्तम् । अत उपासितुरात्मत्वेन ब्रह्मोपास्यमिति स्थितम् ।

आत्मत्वोपासनाधिकरणं समाप्तम् ॥ २ ॥

अथ प्रतीकाधिकरणम् ३ । न प्रतीके न हि सः ॥ ४ ॥

"मनो ब्रह्मेत्युपासीत स यो नाम ब्रह्मेत्युपास्ते" इत्यादिप्रतीकोपासनेष्वप्यात्मत्वानुसन्धानं कार्यं,उत नेति चिन्तायाम् "मनो ब्रह्मेत्युपासीते"ति ब्रह्मोपासनत्वसाम्याद् ब्रह्मण उपासितुरात्मत्वादात्मेत्येवोपासीतेत्येवं प्राप्तेऽभिधीयते—

'न प्रतीक' इति । 'प्रतीके न' आत्मत्वानुसन्धानं कार्यम् । 'न हि सः' न ह्युपासितुरात्मा प्रतीकः । प्रतीकोपासनेषु प्रतीक एवोपास्यो, न ब्रह्म । ब्रह्म तु तत्र दृष्टिविशेषणमात्रम् । प्रतीकोपासने हि नामाऽन्नस्त्वपि ब्रह्मदृष्ट्याऽनुसन्धानम् । ततो नाम्नस्य प्रतीकस्योपासितुरात्मत्वाभावाच्च तथाऽनुसन्धेयम् ।

तत्रापि ब्रह्मैवोपास्यम्, ब्रह्मण उपास्यत्वसम्भवे मनआदीनामचेतनानामल्पशक्तीनां चोपास्यत्वायथायोग्यत्वात् । अतो मनआदिदृष्ट्या ब्रह्मैवोपास्यमिति, तत्राह¹—

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

मनआदिषु 'ब्रह्मदृष्टि'रेव युक्ता, न ब्रह्मणि मनआदिदृष्टिः, ब्रह्मणो मनआदिभ्य उत्कर्षात्, तेषां च विपर्ययात् । उत्कृष्टे हि राजनि भृत्यदृष्टिः प्रत्यवायकरी, भृत्ये तु राजदृष्टिरभ्युदयाय ॥

प्रतीकाधिकरणं समाप्तम् ॥ ३ ॥

१ ०मित्यत आहेति प. ।

अथाऽऽदित्यादिमत्यधिकरणम् ।

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

"य एवासौ तपति तमुद्गीथमुपासीत" इत्यादिषु कर्माङ्गाश्रयेषूपासनेषु संशयः—किमुद्गीथादौ कर्माङ्गे आदित्यादिदृष्टिः कर्तव्या, उतादित्यादिषूद्गीथादिदृष्टिरिति । उत्कृष्टदृष्टिर्निकृष्टे कर्तव्येति न्यायादुद्गीथादीनां च फलसाधनभूतकर्माङ्गत्वेनाफलेभ्य आदित्यादिभ्य उत्कृष्टत्वादादित्यादिषूद्गीथादिदृष्टिरिति प्राप्तेऽभिधीयते—

'आदित्यादिमतयश्चाङ्ग' इति । 'च'—शब्दोऽवधारणे, अत्वङ्ग उद्गीथादावादित्यादिदृष्टय एव कार्याः । कुतः । 'उपपत्तेः'—आदित्यादीनामेवोत्कृष्टत्वोपपत्तेः । आदित्यादिदेवताराधनद्वारेण हि कर्मणामपि फलसाधनत्वम् । अतस्तद्दृष्टिरुद्गीथाद्यङ्गे ॥

आदित्यादिमत्यधिकरणं समाप्तम् ॥ ४ ॥

---

अथाऽऽसीनाधिकरणम् ५ ।

## आसीनः सम्भवात् ॥ ७ ॥

मोक्षसाधनतया वेदान्तशास्त्रैर्विहितं ज्ञानं ध्यानोपासनादिशब्दवाच्यम्, असकृदावृत्तं सन्ततस्मृतिरूपमित्युक्तम् । तदनुतिष्ठन्नासीनः शयानस्तिष्ठन् गच्छंश्च विशेषाभावादनियमेनानुतिष्ठेदिति प्राप्त उच्यते—

'आसीन' इति । 'आसीन' उपासनमनुतिष्ठेत् । कुतः । 'सम्भवात्' । आसीनस्यैव ह्यैकाग्र्यचित्ततासम्भवः । स्थितिगत्योः प्रयत्नसापेक्षत्वात्, शयने च निद्रासम्भवात् । पश्चाद्धारणा[2]श्रयनिवृत्तये सापाश्रय[1] आसीनः कुर्यात् ।

## ध्यानाच्च ॥ ८ ॥

'निदिध्यासितव्य' इति ध्यानरूपत्वादुपासनस्यैकाग्र्यचित्तताऽवश्यम्भाविनी । ध्यानं हि विजातीयप्रत्ययान्तराव्यवहितमेकचिन्तनमित्युक्तम् ।

---

१ शयान इति मु पु । २ पश्चादाश्रयेति प. । ३ छायव इति मु पु ।

## अचलत्वं चापेक्ष्य ॥ ९ ॥

निश्चलत्वं चापेक्ष्य[1] पृथिव्यन्तरिक्षादिषु ध्यानशब्दोपयुक्तिर्दृश्यते "ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौः ध्यायन्तीवाऽऽपो ध्यायन्तीव पर्वता" इति । अतः पृथिवीपर्वतादिवदेकाग्रचित्ततया निश्चलत्वमुपासकस्यासीनस्यैव सम्भवेत् ।

## स्मरन्ति च ॥ १० ॥

स्मरन्ति चासीनस्यैव ध्यानम्—

"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये" इति ।

## यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

एकाग्रतातिरिक्तदेशकालविशेषाश्रवणादेकाग्रतानुकूलो यो देशः कालश्च, स एवोपासनस्य देशः कालश्च । "समे शुचौ शर्करावह्निवालुका[2]विवर्जिते" इति वचनमेकाग्रतैकान्तदेशमाह, न तु देशं नियच्छति, "मनोऽनुकूल"इति वाक्यशेषात् ॥

आसीनाधिकरणं समाप्तम् ॥ ५ ॥

---

आप्रायणाधिकरणम् ६। आ प्रायणा[3]त्तत्रापि हि दृष्टम् ॥१२॥

तदिदमपवर्गसाधनमुक्तलक्षणोपासनमेकाह एव सम्पाद्यमुताऽऽप्रायणात्प्रत्यहमनुवर्तनीयमिति विशये एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वात्तावतैव परिसमापनीयमिति प्राप्त उच्यते—

'आ प्रायणा'दिति, आ मरणादनुवर्तनीयम् । कुतः । 'तत्रापि हि दृष्टम्'—उपासनोद्योगप्रभृत्याऽऽप्रायणान्मध्ये यः कालस्तत्र सर्वत्रापि

---

१ अपेक्ष्येति प० ।
२ शुचौ देशे ......वालुकादि—इति मु० पु० । ३ प्रयाणेतिप्रायः पुस्तकेषु ।

दृष्टमुपासनम् "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यत इति ॥

छान्दोग्याधिकरणं समाप्तम् ॥ ६ ॥

अथ तदधिगमाधिकरणम् ७ ।

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥**

एवं विद्यास्वरूपं विशोध्य विद्याफलं चिन्तयितुमारभते । ब्रह्मविद्याप्राप्तौ पुरुषस्योत्तरपूर्वाघयोरश्लेषविनाशौ श्रूयेते—"तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" "तस्यैवात्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेने"त्युत्तराघाश्लेषः, "तद्यथेषीकातूल[1]मग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति पूर्वाघविनाशः । एतावश्लेषविनाशौ विद्याफलभूतावुपपद्येते नेति[2] संशयः । किं युक्तम् । नोपपद्येते इति । कुतः । "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपी"त्यादिशास्त्रविरोधात् । अश्लेषविनाशव्यपदेशस्तु मोक्षसाधनभूतविद्याविधिवाक्यशेषगतः कथंचिद्विद्यास्तुतिप्रतिपादनेनाप्युपपद्यते । न च विद्या पूर्वोत्तराघयोः प्रायश्चित्ततया विधीयते, येन प्रायश्चित्तेनाघविनाश उच्येत । विद्या हि 'ब्रह्मविदाप्नोति परम्' "ब्रह्म वेद ब्रह्मैव भवती"ति ब्रह्मप्राप्त्युपायतया विधीयते । अतो विद्यार्थवादोऽयमघविनाशाश्लेषव्यपदेश इत्येवं प्राप्तेऽभिधीयते—

'तदधिगम' इति । विद्याप्राप्तौ पुरुषस्य विद्यामाहात्म्या'दुत्तरपूर्वाघयोरश्लेषविनाशा'वुपपद्येते । कुतः । एवंविधं हि विद्यामाहात्म्यमवगम्यते, 'एवंविदि पापं कर्म न श्लिष्यते' 'एवं हास्य सर्वे पाप्मानः प्रदूयन्त' इत्यादिव्यपदेशात् । न च 'नाभुक्तं क्षीयते कर्म'[3]इत्यनेन शास्त्र-

---

१ ०षीकतूलमिति मु पु, न तु मध्येषीकमिति पाठः ।
२ न वेति-इति प ।
३ नाभुक्तकर्म क्षीयते-इति प ।

णास्य विरोधः, भिन्नविषयत्वात्। तद्धि कर्मणां फलजननसामर्थ्यद्रढिमविषयम्, एतत्तत्त्वज्ञाया विद्यायाः प्राक्कृतानां पाप्मनां फलजननशक्तिविनाशसामर्थ्यम् उत्पत्स्यमानानां च फलजननशक्त्युत्पत्तिप्रतिबन्धकरणसामर्थ्यं च प्रतिपादयतीति द्वयोर्विषयो भिद्यते। यथाऽग्निजलयोरौष्ण्यतद्विनाशनसामर्थ्यविषययोर्द्वयोः प्रमाणयोरपि विषयभेदात्प्रामाण्यम्, एवमत्रापीति न कश्चिद्विरोधः।

अघस्याश्लेषकरणं, वैदिककर्मयोग्यतापादनप्रत्यवायहेतुशक्त्युत्पत्तिप्रतिबन्धकरणम्। अघानि हि कृतानि पुरुषस्य वैदिककर्मयोग्यतां सजातीयकर्मान्तरारम्भरुचिं प्रत्यवायं च कुर्वन्ति। अघस्य विनाशकरणम्, मुत्पन्नानां तच्छक्तेर्विनाशकरणम्। शक्तिरपि परमपुरुषाप्रीतिरेव। तदेवं विद्या वेदितुर्वेद्यात्यर्थप्रियत्वेन स्वयमपि निरतिशयप्रिया सती वेद्यभूतपरमपुरुषाराधनरूपा पूर्वकृताघसञ्चयजनितपरमपुरुषाप्रीतिं विनाशयति, सैव विद्या स्वोत्पत्त्युत्तरकालभाव्यघनिमित्तपरमपुरुषाप्रीत्युत्पत्तिं च प्रतिबध्नाति। तदिदमश्लेषवचनं प्रामादिकविषयं मन्तव्यम्, 'नाविरतो दुश्चरिता"दित्यादिभिः शास्त्रैः प्रायणादहरहरभ्यस्यमानाया उत्तरोत्तरातिशयभागिन्या विद्याया दुश्चरितविरतिनिष्पाद्यत्वावगमात्॥

तदधिगमाधिकरणं समाप्तम्॥ ७॥

---

इतराधिकरणम् ८। **इतरस्याप्येवमसंश्लेषः पाते तु॥ १४॥**

उत्तरपूर्वाघयोर्विद्ययाऽश्लेषविनाशावुक्तौ। 'इतरस्य' पुण्यस्या'प्येव'मुक्तेन न्यायेनाश्लेषविनाशौ विद्यया स्याताम्, विद्याफलविरोधित्वसामान्यात् व्यपदेशाच्च। भवति च व्यपदेशः—उभे सुकृतदुष्कृते निर्दिश्य 'सर्वे पाप्मानोऽतो निवर्तन्ते" इति, "तत्सुकृतदुष्कृते धूनुत[1]" इति च। मुमुक्षोरनिष्टफलत्वात्सुकृतस्यापि 'पाप्म'-शब्देन व्यपदेशः। सुकृतस्य[2] शास्त्रीयत्वात्तत्फलस्य केषाञ्चिदिष्टत्वदर्शनाच्च विद्यया अविरोधशङ्का

१ विधूनुत इति मु. पु.। २ अपिशब्दोऽधिको मु. पु.।

निवर्त्तयितुमतिदेशः । ननु विदुषोऽपि सेतिकर्त्तव्यताकोपासननिर्वृत्तये वृष्ट्यादिफलानीष्टान्येव, कथं तेषां विरोधाद्विनाश उच्यते, तत्राह— 'पाते त्वि'ति । शरीरपाते तु तेषां विनाशः, शरीरपातादूर्ध्वं तु विद्याऽननुगुणदृष्टफलानि सुकृतानि नश्यन्तीत्यर्थः ॥

इतराधिकरणं समाप्तम् ॥ ८ ॥

---

अथानारब्धकार्याधिकरणम् ९ ।

**अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥१५॥**

इत्थं विद्योत्पत्तेः पूर्वोत्तरभाविनोः सुकृतदुष्कृतयोरश्लेषविनाशावुक्तौ । ततः पूर्वभाविनोः सुकृतदुष्कृतयोः किमविशेषेण विनाशः, उतानारब्धकार्ययोरेवेति विशये "सर्वे पाप्मानः प्रदूयन्ते" इति विद्याफलस्याविशेषश्रवणाद्विद्योत्पत्त्युत्तरकालभाविन्याश्च शरीरस्थितेः कुलालचक्रभ्रमणादिवत्संस्कारवशादप्युपपत्तेरविशेषेणेति प्राप्त उच्यते—

'अनारब्धकार्ये एव तु पूर्वे' इति । विद्योत्पत्तेः 'पूर्वे' सुकृतदुष्कृते 'अनारब्धकार्ये' अप्रवृत्तफले 'एव' विद्यया विनश्यतः । कुतः । 'तदवधेः' "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति शरीरपातावधिश्रुतेः । न च पुण्यापुण्यकर्मजन्यभगवत्प्रीत्यप्रीतिव्यतिरेकेण शरीरस्थितिहेतुभूतसंस्कारसद्भावे प्रमाणमस्ति ॥

अनारब्धकार्याधिकरणं समाप्तम् ॥ ९ ॥

अथाग्निहोत्राद्यधिकरणम् १० ।

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥**

इतरस्याप्येवमसंश्लेष इति विद्याबलात्सुकृतस्याप्यसंश्लेष उक्तः । अग्निहोत्रादीनां नित्यनैमित्तिकानामाश्रमधर्माणामपि सुकृतत्वसामान्येन तत्फलस्याश्लेषादनिच्छतोऽननुष्ठाने प्राप्त उच्यते—

'अग्निहोत्रादि त्वि'ति । 'तु'-शब्दः सुकृतान्तरेभ्यो विशेषणार्थः । अग्निहोत्राद्याश्रमधर्माः फलाश्लेषासम्भवादनुष्ठेया एव । तदुपसम्भवरय

तत्कार्यार्थत्वाक्षेपात् । विद्याख्यकार्यायैव हि विदुषोऽग्निहोत्राद्यनुष्ठानम् । कथमिदमवगम्यते । 'तद्दर्शनात्,' दृश्यते हि "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादिनाऽग्निहोत्रादीनां विद्यासाधनत्वं विद्यायाश्चाऽऽप्रायणादभ्यासाधेयातिशयाया अहरहरहत्याद्युत्पत्त्या तदुत्पत्त्यर्थमाश्रमकर्माण्यहरहरनुष्ठेयमेव, अन्यथाऽऽश्रमकर्मलोपे दूषितान्तःकरणस्य विद्योत्पत्तिरेव न स्यात् ।

यच्चाऽग्निहोत्रादिसाधुकृत्या विद्योत्पत्त्यर्था, विद्योत्पत्तेः प्राचीनं च सुकृतं "यावत्सम्पातमुषित्वा" "प्राप्यान्तं कर्मणः" इत्यनुभवेन विनष्टम्, भुक्तावशिष्टं च प्रारब्धफलम्,[1] "सुहृदः साधुकृत्या"मित्यस्य को विषय[2], तत्राह–

अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

'अतो'ऽग्निहोत्रादिसाधुकृत्याया विद्योत्पत्त्यर्थाया 'अन्यापि' विद्याऽधिगमात् पूर्वोत्तरयोरुभयोरपि पुण्यकर्मणोः प्रबलकर्मप्रतिबद्धफला साधुकृत्याऽनन्ता सम्भवत्येव, तद्विषयमिद'मेकेषां' शाखिनां वचनम् "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्या"मिति । विद्ययाऽश्लेषविनाशश्रुतिश्च तद्विषया ।

अनुष्ठितस्यापि कर्मणः फलप्रतिबन्धसम्भवं पूर्वोक्तं स्मारयति–

यदेव विद्ययेति हि ॥ १८ ॥

"यदेव विद्यया करोति तदेव वीर्यवत्तर"मित्युद्गीथविद्यायाः क्रतुफलाप्रतिबन्धफलवत्त्ववचनेनानुष्ठितस्यापि कर्मणः फलप्रतिबन्धः सूच्यते हि । अतो विदुषो[3]ऽनुष्ठितप्रतिबद्धफलविषयं 'सुहृदः साधुकृत्या'मिति शाट्यायनकम्[4] ॥

अग्निहोत्राद्यधिकरणं समाप्तम् ॥ १० ॥

---

१ प्रारब्धं कर्मफलमिति मु· पु· । २ को विषय इति मु· पु· ।
३ अतोऽविदुष इत्यकारच्छेदो मु· पु· । ४ ०यनकमिति मु· पु· ।

इतरक्षपणा- धिकरणम् ११ । भोगेन त्वितरे क्षपयित्वाऽथ*संपद्यते ॥ १९ ॥

ययोः पुण्यपापयोरश्लेषविनाशावुक्तौ, ताभ्यामितरे आरब्धकार्ये पुण्यपापे किं विद्यायोनिशरीरावसाने उत तच्छरीरावसाने शरीरान्तरावसाने वेऽत्यनियम इति सशये, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये ऽथ संपत्स्य" इति तच्छरीरविमोकावसानत्वश्रवणात्तदवसाने इति प्राप्त उच्यते—

"भोगेन त्वि"ति । 'तु'-शब्दः पक्षव्यावृत्त्यर्थः । इतरे आरब्धकार्ये पुण्यपापे स्वारब्धफलभोगेन क्षपयित्वा तत्फलभोगसमाप्त्यनन्तरं ब्रह्म 'सम्पद्यते' । ते च पुण्यपापे एकशरीरोपभोग्यफले चेत्तच्छरीरावसाने संपद्यते । अनेकशरीरोपभोग्यफले चेत्, तदवसाने सम्पद्यते । भोगेनैव[1] क्षपयितव्यत्वादारब्धफलयोः कर्मणोः । "तस्य तावदेव चिरं यावन्न विमोक्ष्य" इति च भोगेन तयोः कर्मणोर्विमोक उच्यते, देहावधि नियमाश्रवणात् । तदेवं ब्रह्मविद्यायाः प्रागनुष्ठितमभुक्तफलमनारब्धफलं पुण्यपापरूपं कर्माऽनादिकालसञ्चितमनन्तं विद्यामाहात्म्याद्विनश्यति, विद्यारम्भोत्तरकालमनुष्ठितञ्च न श्लिष्यति । तत्र पुण्यरूपं सर्वं विदुषः सुहृदो गृह्णन्ति, पापं च द्विषन्त इति निरवद्यम् ॥

इतरक्षपणाधिकरणं समाप्तम् ॥ ११ ॥

---

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते शारीरकमीमांसाभाष्ये फलाध्यायस्य चतुर्थस्य प्रथमः पादः ॥



---

* 'संपद्यत' इति सूत्रपाठः सर्वपुस्तकेषु ।

१ चेदिति प्र । २ तदवसाने इति-इति मु पु । ३ एवकारो नास्ति क पुस्तकेषु ।

# अथ चतुर्थाध्यायस्य द्वितीयः पादः ॥

अथ वागधिकरणम् १। **वाङ् मनसि दर्शनाच्छब्दाच्च ॥ १ ॥**

इदानीं विदुषो गतिप्रकारं चिन्तयितुमारभते। प्रथमन्तावदुत्क्रान्तिश्चिन्त्यते। तत्रेदमाम्नायते–"अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवताया"मिति। अत्र 'वाङ् मनसि संपद्यते' इति वाचो मनसि संपत्तिश्रुतिः किं वाग्वृत्तिमात्रविषया, उत वागिन्द्रियविषयेति विशये वृत्तिमात्रविषयेति युक्तम्[1]। कुतः। मनसो वाक्प्रकृतित्वाभावात् तत्र वाक्स्वरूपसम्पत्त्यसम्भवात्। वागादिवृत्तीनां मनोऽधीनत्वेन वृत्तिसम्पत्तिश्रुतिः कथंचिदुपपद्यत इत्येवं प्राप्तेऽभिधीयते–

'वाङ् मनसी'ति। वाक्स्वरूपमेव मनसि संपद्यते। कुतः। 'दर्शनात्[2]', दृश्यते हि वागिन्द्रिये उपरतेऽपि मनःप्रवृत्तिः। वृत्तिमात्रसम्पत्त्याऽपि तदुपपद्यत इति चेत्तत्राह 'शब्दाच्चे'ति, 'वाङ् मनसि संपद्यत' इति वाक्स्वरूपसंपत्तावेव हि शब्दो, न वृत्तिमात्रसम्पत्तौ। न हि तदानीं मृत्युपरमे वागिन्द्रिये प्रमाणान्तरेणोपलभ्यते, येन वृत्तिमात्रं संपद्यत इत्युच्यते। यदुक्तम्–मनसो वाक्प्रकृतित्वाभावाद्वाचो मनसि संपत्तिर्नोपपद्यत इति, तद्'वाङ् मनसि संपद्यत' इति वचनान्मनसा वाक् संयुज्यते न तु तत्र लीयत इति परिहर्तव्यम्।

**अत एव[3] सर्वाण्यनु ॥ २ ॥**

यतो वाचो मनसा संयोगमात्रं सम्पत्तिर्न तु लयः, अत एव वाचमनु सर्वेषामिन्द्रियाणां मनसि सम्पत्तिश्रुतिरुपपद्यते, "तस्मादुपशान्ततेजा अपुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानै"रिति ॥

वागधिकरणं समाप्तम् ॥ १ ॥

---

१ युक्तमिति नास्ति प्र॰। २ तद्दर्शनादिति मु॰ द्वि॰ प॰।
३ अत्राद्दर्शितः सूत्रपाठः सर्वपुस्तकेषु।

अथ मनोऽधिकरणम् २ । **तन्मनः प्राण उत्तरात् ॥ ३ ॥**

'तत्' सर्वेन्द्रियसंयुक्तं 'मनः प्राणे' सम्पद्यते, प्राणेन संयुज्यते, न मनोवृत्तिमात्रम् । कुतः । 'उत्तरात्,' 'मनः प्राण' इति वाक्यात् । अधिकाऽऽशङ्का तु, "अन्नमयं हि सोम्य मन" इति वचनान्मनसोऽन्नप्रकृतिकत्वमवगम्यते । अन्नस्य च "ता अन्नमसृजन्त" इत्यम्मयत्वं सिद्धम् । आपोमयः प्राण इति चाप्प्रकृतित्वं प्राणस्यावगम्यते । अतो 'मनः प्राणे संपद्यते' इत्यत्र प्राणशब्देन प्राणप्रकृतिभूता अपो निर्दिश्य[1] तासु मनःसम्पत्तिप्रतिपादने परम्परया स्वकारणे लय इति सम्पत्तिवचनमुपपन्नं भवतीति । परिहारस्तु "अन्नमयं हि सोम्य मन आपोमयः प्राण" इति मनःप्राणयोरन्नेनाद्भिश्चाप्यायनमुच्यते, न तत्प्रकृतित्वम् । आहङ्कारिकत्वान्मनसः, आकाशादि[2]विकारत्वाच्च प्राणस्य । प्राणशब्दे नापां लक्षणा च स्यादिति ॥

मनोऽधिकरणं समाप्तम् ॥ २ ॥

---

अथ अध्यक्षाधिकरणम् ३ । **सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥**

यथा 'वाङ्मनसि संपद्यते मनः प्राण' इति वचनानुरोधेन मनःप्राणयोरेव वाङ्मनसयोः संपत्तिः, तथा 'प्राणस्तेजसी'ति वचनात्तेजस्येव प्राणः सम्पद्यत इति प्राप्त उच्यते—

'सोऽध्यक्ष' इति । 'स' प्राणो 'ऽध्यक्षे' करणाधिपे जीवे संपद्यते । कुतः । 'तदुपगमादिभ्यः' । प्राणस्य जीवोपगमस्तावच्छ्रूयते—"एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ती"ति । तथा जीवेन सह प्राणस्योत्क्रान्तिः श्रूयते—"तमुत्क्रामन्तं प्राणोऽनूत्क्रामती"ति । प्रतिष्ठा च जीवेन सह श्रूयते "कस्मिन्नुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामी"[3]ति । एवं जीवेन संयुज्य तेन सह तेजःसम्पत्तिरिह 'प्राणस्तेजसी'त्युच्यते । यथा यमुनाया गङ्गया संयुज्य सागरगमनेऽपि यमुना सागरं गच्छतीति वचो न विरुध्यते, तद्वत् ॥

अध्यक्षाधिकरणं समाप्तम् ॥ ३ ॥

१ अपो निर्दिश्यन्ते—इति प० । २ आदिशब्दो नास्ति प० । ३ प्रतिष्ठित स्यामिति मु० ।

अथ भूताधिकरणम् ४ । **भूतेषु तच्छ्रुतेः ॥ ५ ॥**

प्राणस्तेजसीति जीवसंयुक्तस्य प्राणस्य तेजसि संपत्तिरुक्ता । सा सम्पत्तिः किं तेजोमात्र उत संहतेषु सर्वेषु भूतेष्विति विशये तेजोमात्रश्रवणात्तेजसीति प्राप्त उच्यते–

'भूतेष्वि'ति । 'भूतेषु' संपद्यत इति । कुतः । 'तच्छ्रुतेः,' 'पृथिवीमय आपोमयस्तेजोमय' इति जीवस्य सञ्चरतः सर्वभूतमयत्वश्रुतेः ।

ननु तेजःप्रभृतिष्वेकैकस्मिन् क्रमेण संपत्तावपि पृथिवीमय इत्यादिका श्रुतिरुपपद्यते, अत आह–

**नैकस्मिन्दर्शयतो हि ॥ ६ ॥**

'नैकस्मिन्', एकैकस्य कार्याक्षमत्वात् । दर्शयतो ह्यक्षमत्वं श्रुतिस्मृती–"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति[1] तासां त्रिवृतं[2] त्रिवृतमेकैकां करवाणी"ति, नामरूपव्याकरणायेत्यस्याय त्रिवृत्करणमुपदर्श्यते ।

"नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते"इति ।

अतः 'प्राणस्तेजसी'ति 'तेजः'–शब्देन भूतान्तरसंसृष्टमेव तेजोऽभिधीयते । अतो भूतेष्वेव सम्पत्तिः ॥

भूताधिकरणं समाप्तम् ॥ ४ ॥

अथाऽऽसृत्युपक्रमाधिकरणम् ५ । **समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥**

इयमुत्क्रान्तिः किं विद्वदविदुषोः समानोताविदुष एवेति चिन्तायामविदुष एवेति प्राप्तम् । कुतः । विदुषोऽत्रैवामृतत्ववचनादुत्क्रान्त्यभावात् । विदुषो ह्य'त्रैवामृतत्वं'[3] श्राव्यते–

१ इतिशब्दो नास्ति सर्वपु० । २ त्रिवृच्छब्दो नास्ति प्र० ।
३ अमृतत्ववचनमिति मु० पु० ।

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः[1] ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत" इति ।

एवं प्राप्तेऽभिधीयते–

'समाना चासृत्युपक्रमा'दिति । विदुषोऽप्यासृत्युपक्रमादुत्क्रान्तिः समाना, आसृत्युपक्रमात्–आगत्युपक्रमात्, नाडीप्रवेशात् प्रागित्यर्थः । विदुषोऽपि हि[2] नाडीविशेषेणोत्क्रम्य गतिः श्रूयते–

"शतं चैका च हृदयस्य नाड्य-
स्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति
विष्वङ्ङन्या उत्क्रमणे भवन्ती' ति ।

एवं नाडीविशेषेण गतिश्रवणाद्विदुषोऽप्युत्क्रान्तिरवर्जनीया । सा च नाडीप्रवेशात् प्रागविशेषश्रवणात्समाना । नाडीप्रवेशदशायां च विशेषः श्रूयते–"तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो[3] वा शरीरदेशेभ्य" इति । 'शतं चैका च हृदयस्ये'त्यनया श्रुत्यैकार्थ्यात् मूर्ध्ना निष्क्रमणं विद्वद्विषयमितरदविद्वद्विषयम् । यदुक्तम्–विदुषोऽमृतत्वश्रवणात् इति, तत्रोच्यते, 'अमृतत्वं चानुपोष्ये'ति । 'च'–शब्दोऽवधारणे । अनुपोष्य शरीरेन्द्रियादिसम्बन्धमदग्ध्वैव यदमृतत्वमुत्तरपूर्वाघयोरश्लेषविनाशरूपं प्राप्यते, तदुच्यते "यदा सर्वे प्रमुच्यन्त" इत्यादिकया श्रुत्येत्यर्थः । 'अत्र ब्रह्म समश्नुत' इति चोपासनवेलायां यो ब्रह्मानुभवः, तद्विषयमित्यभिप्रायः ।

## तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

अनुपोष्य च तदमृतत्वमदग्धदेहसम्बन्धस्यैवेति विज्ञेयम् । कुतः । 'आ ऽपीतेः संसारव्यपदेशात्' । अपीतिरप्ययो ब्रह्मप्राप्तिः, सा चार्चिरादिना मार्गेण देशविशेषं गत्वेति वक्ष्यते । आ तदवस्थाप्राप्तेः संसारो

१ स्थिता इति श्रु० । २ हिशब्दो नास्ति प० ।
३ वा अन्येभ्य इति श्रु० पु० ।

देहसम्बन्धलक्षणो हि व्यपदिश्यते, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये ऽथ संपत्स्य" इति,

"अश्व इव रोमाणि विधूय पापं
चन्द्र इव राहोर्मुखात् प्रमुच्य ।
धूत्वा शरीरमकृतं कृतात्मा
ब्रह्मलोकमभिसंभवामी"ति च ।

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

इतश्च विदुषोऽपि बन्धो नात्र विदग्धः, यतः सूक्ष्मशरीरमनुवर्तते । कुत इदमवगम्यते । 'प्रमाणतस्तथोपलब्धेः,' उपलभ्यते हि देवयानेन पथा गच्छतो विदुष'स्तं प्रतिब्रूयात् सत्यं ब्रूया'दिति चन्द्रमसा संवादवचनेन शरीरसद्भावः । अतः सूक्ष्मशरीरमनुवर्तते, अतश्च बन्धो न दग्धः ।

## नोपमर्देनातः ॥ १० ॥

अतो

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः[2] ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत"इति-

वचनं न बन्धोपमर्देनामृतत्वं वदति ।

## अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

अस्य सूक्ष्मशरीरस्य क्वचिद्विद्यमानत्वोपपत्तेर्विदुषः प्रक्रान्तमरणस्य मरणात्प्रागूष्मा स्थूलशरीरे क्वाचित्क उपलभ्यते । न च स्थूलस्यैव शरीरस्यायमूष्मा, अन्यत्रानुपलब्धेः । ततश्चोष्मणः क्वचिदुपलब्धेर्विदुषः सूक्ष्मशरीरस्योत्क्रान्तिनिबन्धनेति गम्यते । तस्माद्विदुषोऽप्याऽऽसृत्युपक्रमात्समानोत्क्रान्तिरिति सुष्ठूक्तम्[3] ।

पुनरपि विदुष उत्क्रान्तिर्न सम्भवतीत्याशङ्क्य परिह्रियते-

## प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥ १२ ॥

---

१ धर्मभिन्नस्फारीति प्र० । २ स्थिता इति मु० पु० । ३ सक्तमिति ख ।

तीति । न चात्र विप्रतिपत्त्यम्, 'स्पष्टो ह्येकेषां' माध्यन्दिनानामाम्नाये शारीरो जीव एवापादानमिति, "योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात्प्राणा उत्क्रामन्ती"ति । शारीरात्प्राणानामुत्क्रान्तिप्रसङ्गाभावात्तत्प्रतिषेधो नोपपद्यत इति चे,न्न, "तस्य तावदेव चिर"मिति विदुषः शरीरवियोगकाले ब्रह्मसम्पत्तिवचनेन प्राणानामपि तस्मिन् काले शारीराद् विदुषो वियोगः प्रसज्यते, ततश्च देवयानेन पथा ब्रह्मसंपत्तिर्नोपपद्यत इति 'न तस्य प्राणा उत्क्रामन्ति' देवयानेन पथा ब्रह्मप्राप्तेः प्राग् जीवाद्विदुषोऽपि प्राणा न विश्लिष्यन्ती'त्युच्यते । चार्तभागप्रश्नेऽपि यदा विद्वद्विषय,स्तदाऽयमेव परिहारः । स त्वविद्वद्विषयस्तत्र प्रश्नप्रतिवचनयोर्ब्रह्मविद्याप्रसङ्गादर्शनात्, तत्र हि[2] चहातिग्रहरूपेणेन्द्रियेन्द्रियार्थस्वभावो, ऽपामान्यत्वं, म्रियमाणस्य जीवस्य प्राणपरित्यागो, मृतस्य नामव्यपदेशकीर्त्यनुवृत्ति,स्तस्य च पुण्यपापानुगुणगतिप्राप्तिरित्येते[3]ऽर्थाः प्रश्नपूर्वकं प्रत्युक्ताः । तत्र चा'प पुनर्मृत्युं जयती'त्यपामन्यत्व[4]ज्ञानादविनश्य एव मृत्युजय उच्यते । अतो नात्र विदुषः प्रसङ्गः । अ'विदुषस्तु प्राणाऽनुत्क्रान्तिवचनं स्थूलदेहवत्प्राणा न मुञ्चन्त्यऽपि तु भूतसूक्ष्मवज्जीवं परिष्वज्य गच्छन्तीति प्रतिपादयतीति[5] निरवद्यम् ।

स्मर्यते च ॥ १३ ॥

स्मर्यते च विदुषोऽपि मूर्द्धन्यनाड्योत्क्रान्तिः-

"ऊर्द्धमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन याति परां गति"मिति ॥

प्रासङ्ग्युपक्रमाधिकरणं समाप्तम् ॥ ५ ॥

---

अथ परसंपत्त्यधिकरणम् ६ । तानि परे तथा ह्याह ॥ १४ ॥

सकरणग्रामः सप्राणः करणाध्यक्षः प्रत्यगात्मोत्क्रान्तिवेलायां तेजःप्रभृतिभूतसूक्ष्मेषु,सम्पद्यत इत्युक्तम् । सैषा सम्पत्तिर्विदुषो न विद्यत

---

1 विप्रतिपत्त्यम्–इति प्र० । 2 हीति नास्ति प्र० । 3 प्रेत्यधिकमत्र प्र० । 4 च–इति नास्ति प्र० । 5 प्रतिपादयतीति–इति नास्ति प्र० ।

इत्याशङ्का परिहृता । तानि पुनर्जीवपरिष्वक्तानि भूतसूक्ष्माणि किं यथाकर्म यथाविद्यं च स्वकार्याय गच्छन्तु, उत परमात्मनि सम्पद्यन्त इति विषये मध्ये परमात्मसम्पत्तौ सुखदुःखोपभोगरूपकार्यादर्शनात्तदुपभोगानुगुण्येन यथाकर्म यथाविद्यं च गच्छन्तीति प्राप्त उच्यते—

'तानि परे' इति । तानि परस्मिन्नात्मनि सम्पद्यन्ते । कुतः ? 'तथा ह्याह' श्रुतिः "तेजः परस्यां देवताया"मिति, यथाह श्रुतिस्तदनुगुणं कार्यं कल्प्यमित्यर्थः । सुषुप्तिप्रलययोरिवैषा परमात्मसंपत्त्या सुखदुःखोपभोगायासविश्रमा[1]योत्क्रान्तिदशायामपि ॥

परसंपत्त्यधिकरणं समाप्तम् ॥ ६ ॥

अथाविभागाधिकरणम् ७ । **अविभागो वचनात् ॥ १५ ॥**

सेयं परमात्मनि सम्पत्तिः किं प्राकृतलयवत् कारणापत्तिरूपोत 'वाङ् मनसी'त्यादिवदविभागरूपेति जिज्ञासायाम्, परमात्मनः सर्वेषां योनिभूतत्वात्कारणापत्तिरूपेति प्राप्त उच्यते—

'अविभाग' इति, अपृथग्भावः, पृथग्व्यवहारानर्हसंसर्ग इत्यर्थः । कुतः ? 'वचनात्' "तेजः परस्यां देवताया"मित्यत्रापि 'वाङ् मनसि सम्पद्यत' इति वचनस्यानुषङ्गात् । तस्य च संसर्गविशेषमात्रवाचित्वात्तदनुषक्तस्याभिधानवैरूप्ये प्रमाणाभावादुत्क्रान्तिवेलायां कारणापत्तिप्रयोजनाभावात्, पुनस्तत्राव्यक्तादिसृष्ट्यवचनाच्च ॥

अविभागाधिकरणं समाप्तम् ॥ ७ ॥

अथ तदोकोऽधिकरणम् ८ । **तदोकोऽग्रज्वलनं[2] तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १६ ॥**

एवं गत्युपक्रमावधि[3] विद्वदविदुषोः समानाकारोत्क्रान्तिप्रकार

१ ०विश्राम इति मु० पु० । २ ०ज्वलनमिति अ० । ३ ०वधि—इति मु० पु० ।

तत् । इदानीं विदुषो विशेष उच्यते । तत्रेदमाम्नायते—

"शतं चैका च हृदयस्य नाड्य-

स्तासां मूर्द्धानमभिनिःसृतैका ।

तयोर्द्ध्वमायन्नमृतत्वमेति

विष्वङ्ङन्या उत्क्रमणे भवन्ती"ति ।

अनया नाड्या शताधिकया मूर्द्धन्यनाड्यैव विदुषो गमनमन्याभिरेव चाविदुषो गमनमित्ययं नियम उपपद्यते नेति संशयः । किं युक्तम् । नियमो नोपपद्यत इति । कुतः । नाडीनां भूयस्त्वादतिसूक्ष्मत्वाच्च दुर्विवेच'तया पुरुषेणोपादातुमशक्यत्वा'त्तयोर्द्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती'ति याद्‌च्छिकीमुत्क्रान्तिमनुवदतीति युक्तमस्यैव प्राप्ते प्रचक्ष्महे—

'शताधिकये'ति । विद्वान् शताधिकया मूर्द्धन्यैव नाड्योत्क्रामति । न चास्या विदुषो दुर्विवेचत्वम्, विद्वान् हि परमपुरुषाराधनभूतात्यर्थप्रियविद्यासामर्थ्याद् विद्याङ्गभूततयाऽऽत्मनोऽत्यर्थप्रियगत्यनुस्मरणयोगाच्च प्रसन्नेन हार्द्देन[2] परमपुरुषेणानुगृहीतो भवति । ततश्च तदोकः, तस्य जीवस्य स्थानं हृदयमग्रज्वलनं भवति, यच्च ज्वलनं प्रकाशनं यस्य तदिदमग्रज्वलनम् । 'तत्प्रसादात्'—परमपुरुषप्रसादात्तस्मादपि सद्द्वारो' विद्वांस्तां नाडीं विजानातीति तथा विदुषो गतिरुपपद्यते ॥

तदोकोऽधिकरणं समाप्तम् ॥ ८ ॥

---

अथ रश्म्यनुसाराधिकरणम् ६ । रश्म्यनुसारी ॥ १७ ॥

विदुषो हृदयाच्छताधिकया मूर्द्धन्यनाड्या निर्गतस्यादित्यरश्मीननुसृत्यादित्यमण्डलगतिः श्रूयते—"अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमत[4]" इति, तत्र रश्म्यनुसारेणैवेत्ययं गतिनियमः सम्भ

---

१ चकारो नास्ति ग ।
२ दुर्विवेचत्वादिति मु पु इह चार्थे च प ल्लिखेव ।
३ हार्दनेति हि ग ।   ४ ०माक्रमत इति मु पु ।

अस्ति नेति चिन्तायां निशि मृतस्य विदुषो रश्म्यनुसारासम्भवादनियमः वचनं तु पक्षप्राप्तविषयमिति प्राप्त उच्यते—

'रश्म्यनुसारी'ति। रश्म्यनुसार्येव विद्वानूर्ध्वं गच्छति। कुतः। "अथैतैरेव रश्मिभि"रित्यवधारणात्। पाक्षिकत्वे ह्येवकारोऽनर्थकः स्यात्। यदुक्तं हि–निशि मृतस्य रश्म्यसम्भवाद् रश्मीननुसृत्य गमनं नोपपद्यत इति, तन्न, निश्यपि सूर्यरश्म्यनुसारः सम्भवति। लक्ष्यते हि निश्यपि निदाघसमये ऊष्मोपलब्ध्या रश्मिसद्भावः, हेमन्तादौ तु हिमाभिभवाद्दुर्दिन इवोष्मानुपलम्भः। श्रूयते च नाडीरश्मीनां सर्वदाऽन्योन्यान्वयः, "तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैत आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुञ्चाऽमुष्मादादित्यात्प्रतायन्ते त आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ता" इति। तस्मान्निश्यपि रश्मिसम्भवान्निशि मृतानामपि विदुषां रश्म्यनुसारेणैव ब्रह्मप्राप्तिरस्त्येव ॥

रश्म्यनुसाराधिकरणं समाप्तम् ॥ ९ ॥

---

अथ निशाऽधिकरणम् १०।

**निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १८ ॥**

इदमिदानीं चिन्त्यते– विदुषो निशि मृतस्य ब्रह्मप्राप्तिरस्ति नेति[2]। यद्यपि निशायां सूर्यरश्मिसम्भवाद्रश्म्यनुसारेण गतिर्नैशायामपि सम्भवति, तथाऽपि निशामरणस्य शास्त्रेषु गर्हितत्वात् परमपुरुषार्थलक्षणब्रह्मप्राप्तिर्निशामृतस्य न सम्भवति। शास्त्रेषु दिवामरणं प्रशस्तम्, विपरीतं निशामरणम्,

"दिवा च शुक्लपक्षश्च उत्तरायणमेव च।
मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्" इति।

दिवामरणनिशामरणयोः प्रशस्तत्वविपरीतत्वे चोत्तमाधमगतिहेतुत्वेन

१ चेऽप्युपेत–इति मु० पु०। २ न वेति–इति प०।

स्याताम् । यतो निशि मरणमधोगतिहेतुत्वान्न ब्रह्मप्राप्तिहेतुरिति चेत्, न, विदुषः[1] कर्म'सम्बन्धस्य यावद्देहभावित्वात्' । एतदुक्तं भवति—अनारब्धकार्याणामधोगतिहेतुभूतानां कर्मणां विद्यासम्बन्धेनैव विनाशात्, उत्तरेषां चाश्लेषात्, प्रारब्धकार्यस्य च चरमदेहावधित्वाद्बन्धहेत्वभावाद्विदुषो निशि मृतस्यापि ब्रह्मप्राप्तिः सिद्धैवेति[2] । दर्शयति च श्रुतिः—"तस्य तावदेव चिरं यावन्न विमोक्ष्ये ऽथ संपत्स्ये" इति । 'दिवा च शुक्लपक्षश्चे'त्यादिवचनमविद्वद्विषयम् ॥

निशाऽधिकरणं समाप्तम् ॥ १० ॥

---

अथ दक्षिणायनाधिकरणम् ११ ।

**अतश्चायनेऽपि दक्षिणे ॥ १९ ॥**

निशि मृतस्यापि[3] विदुषो ब्रह्मप्राप्तौ यो हेतुरुक्तस्तत एव हेतोर्दक्षिणेऽप्ययने मृतस्य ब्रह्मप्राप्तिः सिद्धा । अधिकाशङ्का तु—"अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छती"ति दक्षिणायने मृतस्य चन्द्रप्राप्तिश्रवणात्, चन्द्रमसं प्राप्तानां च तेषां "यदा[4] तत्पर्यवैत्यथैत[5]मेवाध्वानं पुनर्निवर्तन्ते[6]" इति पुनरावृत्तिश्रवणात्, भीष्मादीनां च ब्रह्मविज्ञाननिष्ठानामुत्तरायणप्रतीक्षादर्शनात् दक्षिणायने मृतस्य ब्रह्मप्राप्तिर्न सम्भवतीति ।

परिहारस्तु—अविदुषां पितृयाणेन पथा चन्द्रमसं[7] प्राप्तानामेव पुनरावृत्तिर्विदुषस्तु चन्द्रं प्राप्तस्यापि "तस्माद्ब्रह्मणो महिमानमाप्नोती"[8]ति वाक्यशेषात्तस्य दक्षिणायनमृतस्य चन्द्रप्राप्तिर्ब्रह्म प्रतिपत्तेर्[9] विश्राम[10]हेतुमात्रमिति गम्यते । वाक्यशेषाभावेऽपि पूर्वोक्तादेव बन्धहेत्वभावाद्विदुषश्चन्द्रं प्राप्तस्यापि ब्रह्मप्राप्तिरनिवार्या । भीष्मादीनां योगप्रभावात्स्वच्छन्दमरणानां धर्मप्रवर्तनायोत्तरायणप्राशस्त्यप्रदर्शनार्थस्तथाविधाचारः ।

---

१ चेन्नाविदुष इति प्र० ।
२ इतिशब्दः मु० पु० नास्ति ।
३ अपिशब्दो नास्ति प्र० ।
४ यदेति नास्ति प्र० ।
५ ०थैतमिति प्र० ।
६ निवर्तन्त इति प्र० ।
७ चन्द्रमिति प्र० ।
८ ०मवाप्नोतीति प्र० शोधितम् ।
९ विदुष इत्यधिकं प्र० ।
१० विश्रामेति मु० पु० ।

ननु च विदुषो मुमूर्षोर्मति पुनरावृत्त्यपुनरावृत्तिहेतुत्वेन कालविशेषविधिर्दृश्यते—

"यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्यया ऽऽवर्तते पुन"रिति,

तत्राह—

**योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ २० ॥**

नात्र मुमूर्षुन्प्रति मरणकालविशेषोपादानं स्मर्यते; अपि तु योगिनो योगनिष्ठान्प्रति स्मार्ते स्मृतिविषयभूते एते देवयानपितृयाणाख्ये गती स्मर्येते योगाङ्गतया[1] ऽनुदिनं स्मर्तुम् । तथा ह्युपसंहारः—

"नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुने"ति ।

'अग्निर्ज्योति' 'र्धूमो रात्रि'रिति च देवयानपितृयाणे प्रत्यभिज्ञायेते । उपक्रमे च 'यत्र काले त्वि'ति 'काल'-शब्दः कालाभिमानिदेवतातिवाहिकपरः[2], अग्न्यादेः कालत्वासम्भवात् । अत 'स्तेऽर्चिषमभिसम्भवन्ती'ति-विहितदेवयानानुस्मृतिरत्र विद्यानिष्ठान्प्रति विधीयते, न मुमूर्षुन्प्रति मरणकालविशेषः ॥

दक्षिणायनाधिकरणं समाप्तम् ॥ ११ ॥

---

इति श्रीमद्भगवद्रामानुजाचार्यचरणकृतौ शारीरकमीमांसाभाष्ये
फलाध्यायस्य चतुर्थस्य द्वितीयः पादः ॥ २ ॥

---

†† ५४६ पृष्ठगतैतच्चिह्नादारभ्य एतच्चिह्नं यावत् पाठः प. त्रुटितः ।
‡‡ एतच्चिह्नान्तर्गतः पाठः प. त्रुटितः ।  [1] स्मर्तुमित्यधिकं प. ।
[2] देवतातिवाहिकपर इति सर्वेषु ।

# अथ चतुर्थाध्यायस्य तृतीयः पादः ॥

अर्चिराद्यधिकरणम् १। **अर्चिरादिना तत्प्रथितेः ॥ १ ॥**

विदुष उत्क्रान्तस्य नाडीविशेषेण हार्दानुग्रहाद् गत्युपक्रम उक्तः। तस्य गच्छतो मार्ग इदानीं निर्णीयते। तत्र श्रुतिषु मार्गप्रकारा बहुधा[1]ऽऽम्नायन्ते। छान्दोग्ये तावत्—"यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत" इत्युपक्रम्य पञ्चाग्निविद्यामुपदिश्याम्नायते—"अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि[2] च नार्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्[3] मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्[4] ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्त"[5] इति। तथाऽष्टमे—"अथैतैरेव रश्मिभिरूर्ध्वमाक्रमत" इति। कौषीतकिन[6]श्च देवयानमार्गमन्यथाऽधीयते—"स एतं देवयानं पन्थानमासाद्या[7]ग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्र[8]लोकं स प्रजापतिलोकं स ब्रह्मलोक"मिति। तथा,[9] बृहदारण्यके—"य एवमेतद्विदुर्ये चामी[10] अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभि[11]संभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति[12] मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान् वैद्युतः पुरुषो ऽमानवः स एत्य ब्रह्मलोकान् गमयती"ति। तत्रैव पुनरन्यथा—"यदा वै पुरुषो ऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै

---

१ चतुर्विधा इति प०। २ यदु-इति पुनर्मु० प० च०। ३ तत्-इति प०। ४ एतानिति प०। ५ नावर्तन्त इति सकृदेव प०। ६ कौषीतकिन इति प०। ७ अमापद्येति मु० प० च०। ८ चन्द्रमित्युपकल्पितं प०। ९ तथेति नास्ति प०। १० चेमेऽ-इति मु० प० च०। ११ अर्चिषमभीति मु० प० च०। १२ षडुदङ् मासादेतीति प०।

स तत्र विजिहीते यथा रथचक्रस्य खम्तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति तस्मै स[1] तत्र विजिहीते यथा डम्बरस्य[2] खम्तेन स ऊर्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः ख"मित्यादि । तत्र संशयः--किमर्चिरादिरेक एव मार्गः आभिः श्रुतिभिः प्रतिपाद्यत इति तेनैव ब्रह्म गच्छति विद्वान् उत तस्मादन्ये ऽन्यत्र मार्गा इति तेषां ऽन्येन वेत्यनियम इति । किं युक्तम् । अनियम इति । कुतः । अनेकरूपत्वात्तेराधेयाल्लयेवं मार्गो ऽभिधीयते--

'अर्चिरादिने'ति । अर्चिरादिरेक एव मार्गः सर्वत्र प्रतिपाद्यते, अतोऽर्चिरादिनैव गच्छति[3] । कुतः । 'तत्प्रथितेः,' तस्यैव सर्वत्र प्रथितेः । प्रथितिः--प्रसिद्धिः, तस्यैव सर्वत्र प्रत्यभिज्ञानादित्यर्थः । प्रत्यभिज्ञानात् एव मार्गः सर्वत्र न्यूनाधिकभावेन प्रतिपाद्यत इति विद्यागुणोपसंहारवदन्यत्रोक्तानामन्यत्रोपसंहारः क्रियते । छान्दोग्ये तावदुपकोसल[4]विद्यायां पञ्चाग्निविद्यायां चैकरूप एवाम्नायते, वाजसनेयके च पञ्चाग्निविद्यायां तथैवार्चिरादिरल्पान्तर आम्नायते, अतस्तत्रापि स एवेति प्रतीयते, अन्यत्रापि सर्वत्राग्न्यादित्यादयः प्रत्यभिज्ञायन्ते ॥

अर्चिराद्यधिकरणं समाप्तम् ॥ १ ॥

---

अथ वाय्वधिकरणम् २ । **वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥**

अर्चिरादिनैव गच्छन्ति विद्वांस इत्युक्तम् । तत्रार्चिरादिके मार्गे छन्दोगा मासादित्ययोरन्तराले संवत्सरमधीयते--"मासेभ्यः संवत्सरं संवत्सरादादित्य"मिति, वाजसनेयिनस्तु तयोरेवान्तराले देवलोकम्--"मासेभ्यो देवलोकं देवलोकादादित्य"मिति । उभयत्रापि मार्गस्यैकत्वादुभावुभयत्रोपसंहार्यौ । तत्र मासादूर्ध्वमभिहितयोः संवत्सरदेवलोकयोः

---

१ विजिहीर्षत इति मु. अ. अ पुनःपुनः । २ ऊर्ध्वमिति मु. अ. ख । ।
३ आदित्यमाक्रमते तस्मै स इति अ. । ४ आडम्बरस्येति मु. अ. ख
†† एतच्चिह्नान्तर्गतः पाठः अ. त्रुटितः ।
५ गच्छन्तीति मु. मु. ३७ । ६ ०कोपलेति अ. ।

पञ्चम्याऽभिहितस्य श्रौतक्रमस्य तुल्यत्वेऽप्य"र्चिषोऽहरह्न आपूर्य्यमाणपक्ष-मापूर्य्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्ता"नित्यधिककालानां न्यूनकालेभ्य उत्तरोत्तरत्वेन निवेशदर्शनात् संवत्सरस्यैव मासादनन्तरं श्रुतौ विपरिवृत्तेः संवत्सर एव मासादूर्ध्वं निवेशयितव्य इति, तत ऊर्ध्वं देवलोक इति निश्चीयते । अन्यत्र वाजसनेयिनः "यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खन्तेन स ऊर्ध्वं आक्रमते स आदित्यमागच्छती"त्यादित्यात्पूर्वं वायुमधीयते । कौषीतकिनस्तु—"स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति स वायुलोक[1]"मित्यग्निलोकशब्दनिर्दिष्टादर्चिषः परं वायुलोकमधीयते । तत्र कौषीतकिनां पाठक्रमेणार्चिषः परत्वेन प्राप्तस्य वायोर्वाजसनेयिना'न्तेन स ऊर्ध्वं आक्रमते स आदित्यमागच्छती'त्यूर्ध्वशब्दनिर्दिष्टश्रौतक्रमेण पाठक्रमाद्बलीयसा ऽऽदित्यात्पूर्वं प्रवेशो[2] निश्चीयते । अत आदित्यात्पूर्वं संवत्सरादूर्ध्वं देवलोको वायुश्च प्राप्तौ । तत्रेदं चिन्त्यते—किं देवलोको वायुश्चार्थान्तरभूतौ यथेष्टक्रमेण विद्वानभिगच्छेदुतानर्थान्तरत्वेन संवत्सरादूर्ध्वं देवलोकं सन्तं वायुमभिगच्छेदिति । किं युक्तम् । मिश्रार्थत्वम्, प्रसिद्धेः[3] । मिश्रार्थत्वे[4] चोर्ध्वशब्देन पञ्चम्या चोभयोः संवत्सरादित्यान्तराले श्रुतिक्रमेण प्राप्तत्वाद्विशेषाभावाच्च यथेष्टमिति प्राप्त उच्यते—

'वायुमब्दा'दिति । वायुं संवत्सरादूर्ध्वमभिगच्छेत् । कुतः । 'अविशेषविशेषाभ्या' वायोरेव निर्दिष्टत्वात् । देवलोकशब्दो ह्यविशेषेण सामान्येन देवानां लोक इत्यनेन रूपेण वायुमभिधत्ते 'स वायुमभिगच्छति तस्मै स तत्रे'ति वायुशब्दो विशेषेण वायुमभिधत्ते । अतो देवलोकवायुशब्दाभ्यामविशेषविशेषाभ्यां वायुरेवाभिधीयत इति संवत्सरादूर्ध्वं वायुमेवाभिगच्छेत । कौषीतकिनां वायुलोकशब्दश्चाग्निलोकशब्दवद् वायुश्चासौ लोकश्चेति व्युत्पत्त्या वायुमेवाभिधत्ते । वायुश्च देवा-

१ वायुमिति प्र० । २ पूर्वप्रदेश इति द्वि० ।
३ मिश्रार्थत्वप्रसिद्धेरिति प्र द्वि० । ४ मिश्रार्थत्वेनेति प्र ।

नामावासभूत[1] इत्यन्यत्र श्रूयते "योऽयं पवत एष देवानां गृहा"[2] इति।

वाय्वधिकरणं समाप्तम् ॥ २ ॥

---

अथ वरुणाधिकरणम् ३ । **तडितोऽधि वरुणः संबन्धात् ॥ ३ ॥**

कौषीतकिनां "स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोक"मित्यत्राग्निलोकशब्दस्यार्चिःपर्यायत्वेन प्राथम्यमविगीतम्। वायोश्च संवत्सरादूर्ध्वं निवेश उक्तः। आदित्यस्याप्यत्र प्राप्तपाठक्रमबाधेन 'देवलोकादादित्यमादित्याच्चन्द्रमस'मिति वाजसनेयको[3]क्तश्रुतिक्रमाद्देवलोकशब्दाभिहिताद्वायोरुपरि निवेशः सिद्धः। इदानीं वरुणेन्द्रादिषु चिन्ता प्राप्ता[4]–किमेते वरुणादयो यथापाठं वायोरूर्ध्वं निवेशयितव्या आहोस्विद्विद्युतोऽधीति' विशये, अर्चिःप्रभृतिषु सर्वेष्व'ऽर्चिषोऽह'रिति श्रुतिक्रमोपरोधाद्विद्युतः परस्ताच्च 'तत्पुरुषो ऽमानवः स एनान् ब्रह्म गमयती'ति विद्यु[5]त्पुरुषस्य ब्रह्मगमयितृत्वश्रवणाच्च सर्वत्रावकाशाभावेनाप्राप्तौ चोपदेशावैयर्थ्यायावश्यं कस्यचिद्बाध्यत्वे पाठक्रमा[6]नुरोधेन वायोरनन्तरं वरुणो निवेशितव्यः, वाय्वादित्ययोः क्रमस्य बाधितत्वेनेन्द्रप्रजापती अपि तत्रैव निवेशयितव्याविति प्राप्त उच्यते–

'तडितोऽधिवरुण' इति। वरुणस्तावद् विद्युत उपरिष्टान्निवेशयितव्यः। कुतः। 'सम्बन्धात्,' मेघोदरवर्तित्वाद्विद्युतो हि वरुणेन सम्बन्धो लोकवेदयोः प्रसिद्धः। एतदुक्तं भवति–वरुणादीनामुपदेशावैयर्थ्याय क्वचिन्निवेशयितव्यत्वे सति पाठक्रमादर्थक्रमो बलीयानिति विद्युतोऽधि वरुणो निवेशयितव्यः। ततश्चामानवस्य गमयितृत्वं व्यवधानसहमित्यवगम्यते। तस्य च[7] व्यवधानसंहत्वादिन्द्रादेश्चोपदिष्टस्यावश्यं

---

१ ०मावास इति प्र०।
२ पवत स एष देवानां गृह इति प्र०।
३ वाजसनेयिको–इति प्र०।
४ प्राप्तेति नास्ति प्र०।
५ विद्युतः–इति प्र०।
६ यावत्क्रमेति प्र०।
७ चकारोऽत्र मु० पु० नास्ति।

निवेशयितव्यस्य वरुणादुपरि उपदिष्टत्वादागन्तूना[1]मन्ते निवेशयितव्यत्वाच्च वरुणादुपरीन्द्रादिर्निवेशयितव्य इति ॥

।वरुणाधिकरणं समाप्तम् ॥ ३ ॥

---

आतिवाहिकाधिकरणम् ॥ । आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

इदमिदानीं चिन्त्यते—किमर्चिरादयो मार्गचिह्नभूता उत भोगभूमयः, अथ वा विदुषां ब्रह्म प्रेप्सतामतिवोढार[2] इति । किं तावद् युक्तम् । मार्गचिह्नभूता इति । कुतः । उपदेशस्य तथाविधत्वात् । लोके हि दृश्यते ग्रामा[3]न्नगरं वा गन्तुमिच्छतामेवंविधो दैशिकोपदेशः—इतो निष्क्रम्यामुं वृक्षममुकां नदीममुकं च ,पर्वतपार्श्वं[4] गत्वा ऽमुकं ग्रामं गच्छेति । अथ वा, भोगभूमय एताः स्युः, कालविशेषतया प्रसिद्धानामहरादीनां मार्गचिह्नत्वानुपपत्तेः । अन्यस्य[5] च मार्गचिह्नभूतस्यैतेषामनभिधायित्वात् । भोगभूमित्वं "इमेन उ एव[6] लोका यदहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा" इत्यहरादीनां लोकत्ववचनादुपपद्यते । अत एव कौषीतकिनोऽग्निलोकमागच्छती'त्यादिना 'लोक'—शब्दानुविधानेनार्चिरादीन् पठन्तीत्येवं प्राप्ते ब्रूमः—

'आतिवाहिका' इति । विदुषामतिवाहे परमपुरुषेण नियुक्ता आतिवाहिका देवताविशेषा एतेऽर्चिरादयः । कुतः । 'तल्लिङ्गात्'—अतिवहनलिङ्गात् । अतिवहनं हि गन्तॄणां गमयितृत्वम् । तच्च 'तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयती'त्युपसंहारे श्रूयमाणं पूर्वेषामप्यविशेषश्रुतानां स एव संबन्ध इति गमयति । वदन्ति चार्चिरादयः शब्दा अर्चिराद्यात्मभूतानभिमानिदेवताविशेषान्, 'तं पृथिव्यब्रवी'दितिवत् ।

यद्येवम्,'तत पुरुषोऽमानवः स एनान् ब्रह्म गमयती'ति वैद्युतस्यैव

---

१ आगन्तूनामिति मु॰ पु॰ असत्यघटितपाठः ।
२ अतोऽयमोढार इति प्र॰ ।  ३ ग्रामादीनिति प्र॰ ।
४ ०ममुकां नदीममुकं च पर्वतं पार्श्वमिति प्र॰ ।
५ अस्येति प्र॰ ।  ६ ०त्वं च एत एवेति मु॰ पु॰ ।

पुरुषस्य ब्रह्म प्रति गमयितृत्वश्रुतेः विद्युतः[1] परेषां वरुणादीनां कथमातिवाहिकत्वेनान्वय इत्यत आह–

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥

ततो विद्युत उपरि वैद्युतेनाऽमानवेनैवातिवाहिकेन विदुषामा ब्रह्मप्राप्तेर्गमनम् । कुतः । 'तच्छ्रुतेः,' स एनान् ब्रह्म गमयतीति तस्यैव गमयितृत्वश्रुतेः । वरुणादयस्त्वऽनुग्राहका इति तेषामप्यतिवाहिकत्वेनान्वयो विद्यत एव ॥

आतिवाहिकाधिकरणं समाप्तम् ॥ ४ ॥

---

अथ कार्याधिकरणम् ५ । **कार्यं बादरिरस्य गत्युपपत्तेः ॥ ६ ॥**

अर्चिरादिनैव गच्छति विद्वान्, अर्चिरादिरऽमानवान्तश्च गणं आतिवाहिको विद्वांसं ब्रह्म गमयतीत्युक्तम् । इदमिदानीं चिन्त्यते– किमयमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनानवयत्युत परब्रह्मोपासीनानेव, अथ परब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकत्वेनोपासीनांश्चेति विषये[2] कार्यमुपासीनानेव गमयतीति बादरिराचार्यो मन्यते । कुतः । 'अस्य' हिरण्यगर्भमुपासीनस्यैव 'गत्युपपत्तेः' ।–न हि परिपूर्णं सर्वज्ञं सर्वगतं सर्वात्मभूतं परं ब्रह्मोपासीनस्य तत्प्राप्तये देशान्तरगतिरुपपद्यते, प्राप्तत्वादेव । नित्यप्राप्तपरब्रह्मविषयाऽविद्यानिवृत्तिमात्रमेव हि परविद्याकार्यम् । कार्ये तु हिरण्यगर्भरूपे ब्रह्मोपासीनस्य परिच्छिन्नदेशवर्तिप्राप्यप्राप्त्यै गमनमुपपद्यते । अतोऽर्चिरादिक आतिवाहिकगणस्तमेव नयति ।

## विशेषितत्वाच्च ॥ ७ ॥

"पुरुषो ऽमानवः स एत्य ब्रह्मलोकान् गमयती"ति 'लोक'–शब्देन बहुवचनेन च लोकविशेषवर्तिनं हिरण्यगर्भमुपासीनमेवामानवो गमयतीति विशेष्यते । किं च, "प्रजापतेः सभा वेश्म प्रपद्ये" इति कार्यस्य हिरण्यगर्भस्य समीपगमनमर्चिरादिना गतोऽभिसन्धत्ते ।

---

१ वैद्युत –इति पा० । २ विषय इति पा० ।

नन्वेवं 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयती'त्ययं निर्देशो नोपपद्यते । हिरण्यगर्भनयने[1] हि 'स एनान्ब्रह्माणं गमयती'ति निर्देष्टव्यं स्यात्, अत आह—

**सामीप्यात्तु तद्व्यपदेशः ॥ ८ ॥**

"यो ब्रह्माणं विदधाती"ति हिरण्यगर्भस्य प्रथमजत्वेन ब्रह्मसामीप्यात्तस्य 'ब्रह्म'-शब्देन व्यपदेश इति गत्यनुपपत्तिविशेषणादिभिर्हेतुभिर्निरचीयत इत्यर्थः ।

अथ स्यात्—अर्चिरादिना हिरण्यगर्भप्राप्ता"वेव देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" "तयोर्ध्वमायन्नमृतत्वमेती"त्यमृतत्वप्राप्त्यपुनरावृत्तिव्यपदेशो नोपपद्यते, हिरण्यगर्भस्य कार्य्यभूतस्य द्विपरार्द्धकालावसाने विनाशश्रवणात् "आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुने"ति वचनाद्धिरण्यगर्भं प्राप्तस्य पुनरावृत्तेरवर्जनीयत्वादिति, तत्राह—

**कार्यात्यये तदध्यक्षेण सहाऽतः परमभिधानात् ॥ ९ ॥**

कार्य्यस्य ब्रह्मलोकस्यात्यये तदध्यक्षेण हिरण्यगर्भेणाधिकारिकेणावसिताधिकारेण विदुषा सह स्वयमपि तत्राधिगत[2]विज्ञोऽतः कार्य्याद् ब्रह्मलोकात्परं ब्रह्म प्राप्नोतीत्यर्चिरादिना गतस्यामृतत्वप्राप्त्यपुनरावृत्त्यभिधानात् "ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इति वचनाच्चावगम्यते ।

**स्मृतेश्च ॥ १० ॥**

स्मृतेश्चायमर्थोऽवगम्यते—

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पद"मिति ।

अतः कार्य्यमुपासीनमेवार्चिरादिको गणो नयतीति बादरिमतम् ।

अत्र जैमिनिः पक्षान्तरपरिग्रहेण[3] प्रत्यवतिष्ठते—

---

1 ०नयने इति क० । 2 ०ऽधिगततेति क० ।
3 ०परिग्रहेण क० ।

## परं जैमिनिर्मुख्यत्वात् ॥ ११ ॥

'परं' ब्रह्मोपासीनमेवार्चिरादिर्नयतीति 'जैमिनि'राचार्यो मन्यते। कुतः । 'मुख्यत्वात्,' 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयती'ति 'ब्रह्म'-शब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात् । प्रमाणान्तरेण[1] कार्यत्वनिश्चये सत्येव हि लाक्षणिकत्वं युक्तम् । न च गमनानुपपत्तिः प्रमाणम् । परस्य ब्रह्मणः सर्वगतत्वेऽपि विदुषो विशिष्टदेशगतस्यैवाऽविद्यानिवृत्तिः शास्त्रात्[2] । यथा हि विद्योत्पत्ति[3]र्वर्णाश्रमधर्मशौचाचारदेशकालाद्यपेक्षा "तमेतं वेदानुवचनेने"त्यादिशास्त्रादवगम्यते, तथा निःशेषाविद्यानिवर्तनरूपविद्यानिष्पत्तिरपि विशिष्टदेशगतिसापेक्षेति गतिशास्त्रादवगम्यते। विदुष उत्क्रान्तिप्रतिषेधादि तु पूर्वमेव परिहृतम् । यत्तु'ब्रह्मलोका'निति 'लोक'-शब्दबहुवचनाभ्यां विशेषणात्कार्यभूतहिरण्यगर्भप्रतीतिरिति, तदयुक्तम्, निषादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयस्यैव युक्तत्वात् । अर्थस्य चै[4]कत्वे निश्चिते बहुवचनस्या'ऽदितिः पाशा'नितिवदुपपत्तेः । परस्य ब्रह्मणः परिपूर्णस्य सर्वगतस्य सत्यसङ्कल्पस्य स्वेच्छापरिकल्पिताः स्वासाधारणा अप्राकृताश्च लोका नात्यन्ताय न सन्ति,[5] श्रुतिस्मृतीतिहासपुराणप्रामाण्यात् ।

## दर्शनाच्च ॥ १२ ॥

दर्शयति च श्रुतिर्मूर्द्धन्यनाड्या निर्गत्य देवयानेन गतस्य परब्रह्मप्राप्तिम्—"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इति ।

यदुक्तम् "प्रजापतेः सभां वेश्म प्रपद्ये" इत्यर्चिरादिना गतस्य कार्ये प्रत्यभिसंधिर्दृश्यत इति, तत्रोत्तरम्—

---

१ प्रमाणान्तरेऽन्तरेणेति प ।
२ ०निवृत्तिशास्त्रादिति मु० पु ।
३ ०त्पत्तेरिति प ।
४ चकारो नास्ति प० ।
५ इतिशब्दोऽधिक प ।

## न च कार्य्ये प्रत्यभिसन्धिः ॥ १३ ॥

'न चायं 'प्रत्यभिसन्धिः' 'कार्य्ये' हिरण्यगर्भे, अपि तु परस्मिन्नेव ब्रह्मणि । वाक्यशेषे "यशोऽहं भवामि ब्राह्मणाना"मिति तस्याभिसन्धातुः सर्वाविद्याविमोकपूर्वकसर्वात्मभावाभिसंधानात्,

"अश्व इव रोमाणि विधूय पापं
चन्द्र इव राहोर्मुखात्प्रमुच्य ।
धूत्वा शरीरमकृतं कृतात्मा
ब्रह्मलोकमभिसंभवामी"—

त्यभिसंभाव्यस्य ब्रह्मलोकस्याकृतत्व[1]श्रवणात् सर्व[2]बन्धविनिर्मोकस्य च साक्षाच्छ्रवणात् । अतः परमेव ब्रह्मोपासीनमर्चिरादिरातिवाहिको गणो नयतीति जैमिनेर्मतम् ॥

इदानीं बादरायणस्तु भगवान्स्वमतेन सिद्धान्तमाह—

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ १४ ॥

'अप्रतीकालम्बनान्, प्रतीकालम्बनव्यतिरिक्ता'न्नयत्य'र्चिरादिरातिवाहिको गण इति भगवान्बादरायणो मन्यते[3] । एतदुक्तं भवति—कार्य्यमुपासीनान्नयतीति नायं पक्षः सम्भवति, परमेवोपासीनान्नयत्य[4]पि नियमो नास्ति, न च प्रतीकालम्बनानपि नयति[5] । अपि तु, ये परं ब्रह्मोपासते, ये चात्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते, तानुभयविधान्नयति । ये तु ब्रह्मकार्य्यान्तर्भूतं नामादिकं वस्तु देवदत्तादिषु सिंहादिदृष्टिवद्ब्रह्मदृष्ट्या केवलं वा तत्तद्वस्तूपासते, न तान्नयति । अतः, परं ब्रह्मोपासीनानात्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान्नयतीति । कुतः । 'उभयथा च दोषात्,' कार्य्यमुपासीनान्नयतीति पक्षे "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य"त्यादिकाः श्रुतयः प्रकुप्येयुः; परमेव ब्रह्मोपासीनान्नितित च नियमे "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप

---

१ अकृतकत्वेति प्र० ।    २ सं—इत्यधिकं प्र० ।
३ मेन इति प्र० ।    ४ न्नयतीति नास्ति प्र० ।    ५ नयतीति—इति प्र० ।

इत्युपासते तेऽर्चिषमभिसम्भवन्ती"ति पञ्चाग्निविदोऽप्य[1]र्चिरादिगणो नयतीति श्रुतिः प्रकुप्येत् । अत उभयस्मिन्नपि पक्षे दोषः स्यात्, तस्मादुभयविधान्नयति[2] । तदेतदाह 'तत्क्रतुश्चे'ति[3] । तत्क्रतुः, यथो[4]पासीनस्तथैव प्राप्नोतीत्यर्थः । "यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" "तं यथायथोपासत"इति न्यायात् । पञ्चाग्निविदोऽप्यर्चिरादिना गतिश्रवणात्, अर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च । अत एव तत्क्रतुन्यायात् प्रकृतिविनिर्मुक्तब्रह्मात्मकात्मानुसन्धानं सिद्धम् । नामादिप्राणपर्यन्तप्रतीकालम्बनानां तूभयविधश्रुतिसिद्धोपासनाभावादविमिश्रोपासने तत्क्रतुन्यायाच्चार्चिरादिना गतिर्ब्रह्मप्राप्तिश्च न विद्यते ।

तमिमं विशेषं श्रुतिरेव दर्शयतीत्याह—

विशेषं च दर्शयति ॥ १५ ॥

"यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवती"त्यादिका श्रुतिर्नामादिप्राणपर्यन्त[5]प्रतीकमुपासीनानां गत्यनपेक्षं परिमितफलविशेषं[6] दर्शयति । तस्मादविमिश्रं केवलं वा विद्वांस्तु ब्रह्मबुद्ध्या तद्वियोगेन च य उपासते न तान्नयति, अपि तु परं ब्रह्मोपासीनानात्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकं चोपासीनानातिवाहिको गणो नयतीति सिद्धम् ॥

कार्याधिकरणं समाप्तम् ॥ ५ ॥

इति श्रीमद्भगवद्रामानुजाचार्यचरणकृतौ शारीरकमीमांसाभाष्ये फलाध्यायस्य चतुर्थस्य तृतीयः पादः ॥ ३ ॥



१ अपिशब्दो नास्ति मु॰ पु ।
२ इतिशब्दोऽधिको मु॰ पु॰ ।
३ इतिशब्दो नास्ति ग ।
४ तथैव पु॰ दृश्यते ।
५ प्राणपर्यन्तेति ग॰ नास्ति ।
६ शेषाधिकं मु॰ पु ।

# अथ चतुर्थाध्याये चतुर्थः पादः ।

अथ संपद्याविर्भावाधिकरणम् १ ।

## संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

परं ब्रह्मोपासीनानामात्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानाऽमर्चिरादिना मार्गेणापुनरावृत्तिलक्षणा गतिरुक्ता । इदानीं मुक्तानामैश्वर्यप्रकारं चिन्तयितुमारभते । इदमाम्नायते—"एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इति । किमस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपन्नस्य देवादिरूपवत्साध्येन रूपेण सम्बन्धोऽनेन वाक्येन प्रतिपाद्यते उत स्वाभाविकस्य स्वरूपस्याविर्भाव इति संशये साध्येन रूपेण संबन्ध इति युक्तम् । अन्यथा ह्यपुरुषार्थावबोधित्वं मोक्षशास्त्रस्य स्यात्, स्वरूपस्य स्थितेऽपुरुषार्थत्वदर्शनात् । न हि सुषुप्तौ देहेन्द्रियव्यापारोपरतौ केवलस्यात्मस्वरूपस्य पुरुषार्थसम्बन्धो दृश्यते । न च दुःखनिवृत्तिमात्रं परं ज्योतिरुपसम्पन्नस्य पुरुषार्थः, येन स्वरूपाविर्भाव एव मोक्ष इत्युच्ये[1]त । "स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य" "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती"त्यादिभ्यो मुक्तस्य सुखानन्त्यश्रवणात् । न चापरिच्छिन्नानन्द[2]रूपचैतन्यमेवास्य स्वरूपम्, तच्च संसारदशायामविद्यातिरोहितं परं ज्योतिरुपसम्पन्नस्याविर्भवतीति शक्यं वक्तुम्, ज्ञानस्वरूपस्य तिरोधानासम्भवात् । प्रकाशपर्यायस्य ज्ञानस्य तिरोधानं तद्विनाश एवेति हि पूर्वमेवोक्तम् । न च† प्रकाशमात्रस्यानन्दता सम्भवति, सुखस्वरूपता ह्यानन्दस्वरूपता, सुखस्वरूपत्वं चात्मनोऽनुकूलत्वम्† । प्रकाशमात्रात्मवादिनः कस्य प्रकाशोऽनुकूलवेदनीयो भवेदिति प्रकाशमात्रात्मवादिनः कथञ्चि-

---

१ ०त्युच्यते—इति प्र० ।  २ स्वेति अधिकं प्र० ।

† एतच्चिह्नान्तर्गतः पाठः प्र० त्रुटितः ।

दप्यानन्दस्वरूपता दुरुपपादा । स्वरूपापत्तिमात्रे च साध्ये स्वरूपस्य नित्यनिष्पन्नत्वादुपसम्पन्नस्य स्वेन रूपेणाभिनिष्पद्यत इति वचनमनर्थकं स्यात् । अतोऽपूर्वेण साध्येन रूपेण संबध्यते । एवं चा'भिनिष्पद्यत' इति वचनं मुख्यार्थमेव भवति । स्वेन रूपेणेत्यप्यानन्दैकान्तेन स्वासाधारणेनाभिनिष्पद्यत इति सङ्गच्छत इत्येवं प्राप्तेऽभिधीयते–

"सम्पद्याविर्भाव' इति । अयं प्रत्यगात्माऽर्चिरादिना परं ज्योतिरुपसम्पद्य यं दशाविशेषमापद्यते स स्वरूपाविर्भावरूपः, नापूर्वाकारोत्पत्तिरूपः । कुतः । 'स्वेन शब्दात्,'स्वेन रूपेणेति विशेषणोपादानादित्यर्थः । आगन्तुकदेह[1]परिग्रहे हि 'स्वेन रूपेणे'ति विशेषणमनर्थकं स्यात्, अविशेषणेऽपि तस्य स्वकीयरूपत्वसिद्धेः ।

यदुक्तं स्वरूपस्य नित्यप्राप्तत्वादुपसंपद्याभिनिष्पद्यत इति वचनमनर्थकमिति, तत्रोत्तरम्–

## मुक्तः प्रतिज्ञानात् ॥ २ ॥

कर्मसम्बन्धतत्कृतदेहादिविनिर्मुक्तः[2] स्वाभाविकेन रूपेणावस्थितोऽत्र स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते । अतो नित्यप्राप्तस्यापि स्वरूपस्य कर्मरूपाविद्यातिरोहितस्य तिरोधाननिवृत्तिरत्राभिनिष्पत्तिरुच्यते । कुतः । 'प्रतिज्ञानात्,'सा हि प्रतिपाद्यतया प्रतिज्ञाता । कुत इदमवगम्यते । 'य आत्मे'ति प्रकृतं प्रत्यगात्मानं जागरितावस्थात्रितयविनिर्मुक्तं प्रियाप्रियहेतुभूतकर्मारब्धशरीरविनिर्मुक्तं च प्रतिपादयितुम् "एतं त्वेव ते भूयोऽनुव्याख्यास्यामी"ति पुनःपुनरुक्त्वा "एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत" इत्यभिधानात् । अतः कर्मणा संबद्धस्य परं ज्योतिरुपसम्पद्य बन्धनिर्मोक्षरूपा विनिर्मुक्तिः स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते । स्वरूपाविर्भावेऽप्य'भिनिष्पत्ति'–शब्दो दृश्यते 'पुत्रपाऽयमर्थो निष्पद्यत' इत्यादिषु ।

१ आगन्तुकविशेषेति क्वचित् ।
२ ०मुक्तमिति निर्दिभक्तिकं प० ।

यच्चोक्तम्–आत्मस्वरूपस्य सुषुप्ताद्यपुरुषार्थत्वदर्शनात् स्वरूपाविर्भावे मोक्षशास्त्रस्यापुरुषार्थावबोधित्वं स्यादिति कृत्वा देशाद्यवस्थाधत्सुखसम्बन्धपदस्थान्तरप्राप्तिरभिनिर्वृत्तिरिति, तत्रोत्तरम्–

## आत्मा प्रकरणात् ॥ ३ ॥

स्वरूपेणैवायमात्माऽपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणक इति प्रकरणादवगम्यते "य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प" इति हि प्रजापतिवाक्यप्रक्रमः । इदं च प्रकरणं प्रत्यगात्मविषयमित्यु'त्तराच्चेदाविर्भूतस्वरूपस्त्व'त्यत्र प्रतिपादितम् । अतोऽपहतपाप्मत्वादिस्वरूप एवायमात्मा संसारदशायां कर्मरूपयाऽविद्यया तिरोहितस्वरूपः परं ज्योतिरुपसंपद्याविर्भूतस्वरूपो भवति । अतः प्रत्यगात्मनोऽपहतपाप्मत्वादयः स्वाभाविका गुणाः परं ज्योतिरुपसम्पत्त्याविर्भवन्ति, नोत्पद्यन्ते । यथोक्तं भगवता शौनकेनापि–

"यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥
यथोदपानकरणात् क्रियते न जलाम्बरम्[१] ।
सदेव नीयते व्यक्तिमसतः सम्भवः कुतः ॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाश्यन्ते[२] न जन्यन्ते नित्या एवात्मनो हि ते" इति ।

अतो[३] ज्ञानानन्दादिगुणानां कर्मणाऽऽत्मनि संकुचितानां परं ज्योतिरुपसंपद्य कर्मरूपबन्धक्षये विकासरूपाविर्भावो नानुपपन्न इति सूक्तं 'संपद्याविर्भाव' इति ॥

संपद्याविर्भावाधिकरणं समाप्तम् ॥ १ ॥

---

१ इति नास्ति पु॰ ।
२ जलाम्बरमिति मु॰ पु॰ । ३ प्रकाश्यन्त इत्येव प्रायः ।
४ अत इति नास्ति ब॰ ।

अथाविभागेन दृष्ट स्वाधिकरणम् २।

## अविभागेन दृष्टत्वात् ॥ ४ ॥

किमयं परं ज्योतिरुपसंपन्नः सर्वबन्धविनिर्मुक्तः प्रत्यगात्मा स्वात्मानं परमात्मनः पृथग्भूतमनुभवत्युत तत्प्रकारतया तदविभक्तमिति विशये "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता,"

"यदा पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्म योनिम् ।
तदा विद्वान्पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति" ॥
"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" ॥—

इत्यादिश्रुतिस्मृतिभ्यो मुक्तस्य परेण साहित्यसाम्यसाधर्म्यावगमात् पृथग्भूतमनुभवतीति प्राप्त उच्यते—

'अविभागेने'ति । परस्माद् ब्रह्मणः स्वात्मानम'विभागेना'नुभवति मुक्तः । कुतः । 'दृष्टत्वात्', परं ब्रह्मोपसम्पद्य निवृत्ताविद्यातिरोधानस्य याथात्म्येन स्वात्मनो दृष्टत्वात् । स्वात्मनः स्वरूपं हि "तत्त्वमसि, ऽयमात्मा ब्रह्म" "ऐतदात्म्यमिदं सर्वं" "सर्वं खल्विदं ब्रह्मे"त्यादिसामानाधिकरण्यनिर्देशै"र्य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृत." "अन्तः प्रविष्टः शास्ता जनाना" "स त आत्मे"त्यादिभिश्च परमात्मात्मकं तच्छरीरतया तत्प्रकारभूतमिति प्रतिपादितम् 'अयस्थितेरिति काशकृत्स्न' इत्यत्र । अतो ऽविभागेनाहं ब्रह्मास्मीत्येवानुभवति । साम्यसाधर्म्यव्यपदेशो ब्रह्मप्रकारभूतस्यैव प्रत्यगात्मनः स्वरूप तत्सममिति देवादिप्राकृतरूपप्रहाणेन ब्रह्मसमानशुद्धिं प्रतिपादयति । सहश्रुतिस्त्वेवंभूतस्य प्रत्यगात्मनः प्रकारिणा ब्रह्मणा सह तद्गुणानुभवं प्रतिपादयतीति न कश्चिद्विरोधः । ब्रह्मप्रकारतया तदविभागोक्तेर्हि 'सद्भूत्वा-

१ सर्वमिति सकदेव प॰ ।

देव तच्छ्रुते'रित्यादि न विरुध्यते, 'अधिकं तु भेदनिर्देशात्' 'अधिकोपदेशा'दित्यादि च ॥

अविभागेन दृष्टत्वाधिकरणं समाप्तम् ॥ २ ॥

---

अथ ब्राह्माधिकरणम् ३ । ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥५॥

प्रत्यगात्मनः परं ज्योतिरुपसंपद्य निवृत्ततिरोधानस्य स्वरूपाविर्भाव एवेत्युक्तम् । तत्र येन[१] स्वरूपेणायमात्माऽऽविर्भवति, तत्स्वरूपं श्रुतिवैविध्याद्विचार्यते—किमपहतपाप्मत्वादिकमेवास्य स्वरूपमिति तेन रूपेणायमाविर्भवत्युत विज्ञानमात्रमेवेति तेन रूपेण, अथोभयोरविरोध इत्युभयस्वरूपेणे[३]ति । किं तावत्प्राप्तम् । ब्राह्मेणेति जैमिनिराचार्यो मन्यते । ब्राह्मेणापहतपाप्मत्वादिनेत्यर्थः । अपहतपाप्मत्वादयो हि दहरवाक्ये ब्रह्मसम्बन्धितया श्रुताः । ब्राह्मेणेति कुतोऽवगम्यते । 'उपन्यासादिभ्यः,' उपन्यस्यन्ते हि ब्रह्मगुणा अपहतपाप्मत्वादयः प्रत्यगात्मनोऽपि प्रजापतिवाक्ये "य आत्माऽपहतपाप्मे"त्यादिना 'सत्यसङ्कल्प' इत्यन्तेन । 'आदि'-शब्देन सत्यसङ्कल्पत्वा[२]दिगुणायत्ता जक्षणादयो "जक्षत्क्रीडन् रममाण" इत्यादिवाक्यावगता व्यवहारा गृह्यन्ते । अत एभ्य उपन्यासादिभ्यः प्रत्यगात्मनो विज्ञानमात्रस्वरूपत्वं न सम्भवतीति जैमिनेर्मतम् ॥

चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

चैतन्यमात्रमेवास्यात्मनः स्वरूपमिति तेन रूपेणाविर्भवतीत्यौडुलोमिराचार्यो मन्यते[४] । कुतः । 'तदात्मकत्वा'त्तन्मात्रात्मकत्वादस्य प्रत्यगात्मनः, "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा[६] अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे"त्यवधारणाद्विज्ञानमात्रमेवास्य स्वरूपमित्यवगम्यते । अतोऽस्य गुणान्तराभावा-

---

। एतच्छ्रुत्यन्तर्गत पाठः ष• त्रुटित ।
१ यकारो नास्ति मु• पु ।   २ त्वेति नास्ति ष ।
३ अथेति मकारादि. पाठः ष• ।   ४ मेन इति ष ।
५ येशब्दो नास्ति ष• ।   ६ विज्ञानघन एवेत्यधिकं मु• पु• ।

द'ऽपहतपाप्मे'त्यादयः शब्दाः विकारसुखदुःखाविद्यात्मकधर्मव्यावृत्तिपरा इति चिति तन्मात्ररूपेणाविर्भाव इत्यौडुलोमेर्मतम् ॥

सम्प्रति भगवान्बादरायणः स्वमतेन सिद्धान्तमाह—

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

'एवमपि' विज्ञानमात्रस्वरूपत्वप्रतिपादने सत्यपि सत्यकामत्वादीनां पूर्वोक्तानां गुणाना'मविरोधं बादरायण' आचार्यो मन्यते । कुतः । 'उपन्यासात् पूर्वभावा'दौपनिषदा'द्य आत्माऽपहतपाप्मे'त्याद्युपन्यासात्प्रमाणात्पूर्वोक्तापहतपाप्मत्वसत्यसंकल्पत्वादीनामपि भावाद्विद्यमानत्वात्, तुल्यप्रमाणका[1]नामितरेतरबाधो न युज्यत इत्यर्थः । न च वस्तुविरोधादपहतपाप्मत्वादीनामविद्यापरि[2]कल्पितत्वं न्याय्यम्, विशेषाभावाद्विपरीतं कस्मान्न भवतीति न्यायात् । तुल्यबलत्वे ह्युभयस्यावधारणस्यान्यपरत्वमेव न्याय्यम् । एवमप्यविरोध इत्यभ्युपगम्य वदन् ज्ञानमात्रमेवास्य स्वरूपं नान्यत्किञ्चिदस्तीत्ययमर्थो 'विज्ञानघन एवे'त्यादिभिर्न प्रतिपाद्यत इति मन्यते । कस्तर्हि 'विज्ञानघन एवे'त्यवधारणस्यार्थः । कृत्स्नोऽप्यात्मा जडव्यावृत्तः स्वप्रकाशो, नान्यायत्तप्रकाशः स्वल्पोऽपि प्र[3]देशोऽस्तीत्ययमर्थो वाक्यादेव सुव्यक्तः, "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन'एवे"ति । न चैवं प्रत्यगात्मनो धर्मिस्वरूपस्य कृत्स्नस्य विज्ञानघनत्वेऽप्यपहतपाप्मत्वसत्यसङ्कल्पत्वादिधर्मसम्बन्धो वाक्यान्तरावगतो[4] विरुध्यते, यथा सैन्धवघनस्य कृत्स्नस्य रसघनत्वे रसनेन्द्रियावगते चक्षुराद्यवगताः रूपकाठिन्यादयो न विरुध्यन्ते । इदमत्र[5] वाक्यतात्पर्यम्— यथा रसवत्त्वाम्रफलादिषु त्वगादिप्रदेशभेदेन रसभेदे[6] सत्यपि सैन्धवघ-

---

१ कप्रत्ययो नास्ति । २ परीति नास्ति प० ।
३ प्रेति नास्ति प० । ४ ०न्तरानुगत इति प० ।
५ इदमन्येति प० । ६ ०प्रदेशभेदेन रसभेदेन रसभेदे–इति प० ।

तस्य सर्वत्रैकरसत्वम्, तथाऽऽत्मनोऽपि सर्वत्र विज्ञानस्वरूपत्वम्, स्वप्रकाशस्वरूपत्वमित्यर्थः ॥

ब्राह्माधिकरणं समाप्तम् ॥ ३ ॥

---

अथ संकल्पाधिकरणम् ४ । **सङ्कल्पादेव* तच्छ्रुतेः ॥ ८ ॥**

मुक्तः परं ब्रह्मोपसम्पद्य ज्ञानस्वरूपोऽपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणक आविर्भवतीत्युक्तम् । तमधिकृत्य तस्य सत्य[1]सङ्कल्पत्वप्रयुक्ता व्यवहाराश्च श्रूयन्ते—"स तत्र पर्येति जक्षत्[2] क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वे"ति । किमस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षोत परमपुरुषस्येव[3] सङ्कल्पमात्रादेव भवतीति विशये लोके राजादीनां सत्यसङ्कल्पत्वेन व्यवह्रियमाणानां कार्यनिष्पादने प्रयत्नान्तरसापेक्षत्वदर्शनादस्यापि तत्सापेक्षेति प्राप्त उच्यते—

'सङ्कल्पादेवे'ति । कुतः । 'तच्छ्रुतेः', "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती"ति हि सङ्कल्पादेवास्य पित्रादीनां समुत्थानं श्रूयते । न च प्रयत्नान्तरसव्यपेक्षत्वाभिधायि श्रुत्यन्तरं दृश्यते, येनास्य सङ्कल्पादेवेत्यवधारणस्य 'विज्ञानघन एवे'तिवद् व्यवस्थापनं क्रियेत[4] ।

**अत एव चानन्याधिपतिः ॥ ९ ॥**

यतो, मुक्तः सत्यसङ्कल्पः, अत एवानन्याधिपतिश्च । अन्याधिपतित्वं हि विधिनिषेधयोग्यत्वम् । विधिनिषेधयोग्यत्वे हि प्रतिहतसङ्कल्पत्वं भवेत् । अतः सत्यसङ्कल्पत्वश्रुत्यैवानन्याधिपतित्वं च सिद्धम् । अत एव "स स्वराड् भवती"त्युच्यते ॥

संकल्पाधिकरणं समाप्तम् ॥ ४ ॥

---

* तुशब्दरहितश्च सूत्रपाठः सर्वेषु ।
१ सत्येति मु० पु० नास्ति ।
२ जक्षन्निति प्र० अत्र शोधितम्, सर्वे तु पाठादिकम् ।
३ ०स्येवेति प्र० ।  ४ क्रियते—इति प्राय. ।

अथाऽभावाधिकरणम् ५ । **अभावं बादरिराह ह्येवम् ॥ १० ॥**

किं मुक्तस्य देहेन्द्रियाणि न सन्त्युत सन्ति, अथ वा यथासङ्कल्पं सन्ति न सन्ति चेति विषये शरीरेन्द्रियाणामभावं बादरिराचार्यो मन्यते । कुतः । 'आह ह्येवम्', "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इति शरीरसम्बन्धे सुख[1]दुःखस्यावर्जनीयत्वमभिधाय "स्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इति मुक्तस्याऽशरीरत्वं ह्याह श्रुतिः ॥

**भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥**

मुक्तस्य शरीरेन्द्रियभाव[2] जैमिनिराचार्यो मन्यते । कुतः । 'विकल्पामननात्,' विविधः कल्पो विकल्प,[3] वैविध्यमित्यर्थः । "स एकधा भवति त्रिधा भवति पञ्चधा भवति सप्तधे"त्यादिश्रुतेः । आत्मन एकस्याच्छेद्यस्यानेकधाभावासम्भवात्त्रिधाभावादयः शरीरनिबन्धना इत्यवगम्यते । अशरीरत्व[4]वचनं तु कर्मनिमित्तशरीराभावपरम् । तदेव हि शरीरं प्रियाप्रिय[5]हेतुः ॥

भगवांस्तु बादरायणः स्वमतेन सिद्धान्तमाह—

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥**

सङ्कल्पादेवेत्यत'ऽतः'—शब्देन परामृश्यते । अत एव सङ्कल्पादुभयविधं सशरीरमशरीरं च मुक्तं भगवान्बादरायणो मन्यते । एवं चोभयी श्रुति[6]रुपपद्यते । 'द्वादशाहवत्,' यथा[7] 'द्वादशाहमृद्धिकामा उपेयुः' "द्वादशाहेन प्रजाकामं याजये" दित्युपैतियजतिचोदनाभ्यां सङ्कल्पभेदेन सत्त्रमहीनश्च भवति ।

---

१ सुखेति प्र० नास्ति ।
२ ०न्द्रियादिभावमिति प्र ।
३ विकल्प इति नास्ति प्र ।
४ त्वेति नास्ति प्र० ।
५ शरीरमिति प्र ।
६ रुभयविधश्रुतिरिति प्र ।
७ द्वादशाहेनेति प्र० ऽधिकम् ।

यदा शरीराद्युपकरणान्तरस्थम्, तदा तानि शरीराद्युपकरणानि स्वेनैव सृष्टानीति नास्ति नियम इत्याह—

**तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥**

स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे परमपुरुषसृष्टैरुपकरणैर्भोगोपपत्तेः सत्यसङ्कल्पोऽपि स्वयं न सृजति । यथा स्वप्ने "अथ रथान् रथयोगान् पथः सृजते" इत्यारभ्य "अथ वेशन्तान् पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ते"ति

य एषु सुप्तेषु जागर्ति
कामंकामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चने"ति चेश्वरसृष्टै रथाद्युपकरणैर्जीवो भुङ्क्ते, तथा मुक्तोऽपि लीलावद्भिरीश्वरेण सृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते ॥

**भावे जाग्रद्वत् ॥ १४ ॥**

स्वसङ्कल्पादेव सृष्टतनुप्रभृतिपितृलोकाद्युपकरणभावे जाग्रत्पुरुषभोगवन्मुक्तो लीलारसं भुङ्क्ते । परमपुरुषोऽपि लीलार्थं दशरथवसुदेवपितृलोकादिकमात्मनः सृष्ट्वा तैर्मनुष्यधर्मलीला[1]रसं यथा भुङ्क्ते, तथा[2] मुक्तानामपि स्वलीलार्थे पितृलोकादिकं स्वयमेव सृजति कदाचित्, कदाचिच्च मुक्ताः सत्यसङ्कल्पत्वात् परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृजन्तीति सर्वमुपपन्नम् ॥

नन्वात्माऽणुपरिमाण इत्युक्तम्, कथमनेकशरीरेष्वेकस्याणोरात्माभिमानसम्भव इत्यत्राह[3]—

१ मनुष्यदेहलीलेति प. पु ।
२ यथा भुङ्क्ते तथेति प. पु ।
३ इत्यत्र चाहेति ग. पु ।

प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

यथा प्रदीपस्यैकस्यैकस्मिन्देशे वर्तमानस्य स्वप्रभया देशान्तरावेश,स्तथाऽऽत्मनो ऽप्येकदेशस्थितस्यैव स्वप्रभारूपेण चैतन्येन सर्वशरीरावेशो नानुपपन्नः, यथा चैकस्मिन्नपि देहे हृदयाद्येकप्रदेशवर्तिनोऽपि चैतन्यव्याप्त्या सर्वस्मिन्देहे चात्माभिमानं, स्तद्वत् । इयान्विशेषः, अमुक्तस्य कर्मणा संकुचितज्ञानस्य देहान्तरेष्वात्माभिमानानुगुणा व्याप्तिर्न सम्भवति, मुक्तस्य स्वऽसङ्कुचितज्ञानस्य यथासङ्कल्पमात्माभिमानानुगुणा व्याप्तिरिदमित्थंग्रहणानुगुणा च नानुपपन्ना । तथा हि दर्शयति–

"बालाग्रशतभागस्य शतधा कल्पितस्य च ।

भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" इति ।

अमुक्तस्य कर्म नियामकम् मुक्तस्य तु स्वेच्छेति विशेषः ॥

ननु परं ब्रह्म प्राप्तस्याऽऽन्तरबाह्यज्ञानलोपं दर्शयति श्रुतिः "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर"मिति, तत्कथं मुक्तस्य सार्वज्ञ्यमुच्यते, तत्रोत्तरम्–

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

नेदं वचनं मुक्तविषयम्, अपि तु 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षम्' । स्वाप्ययः सुषुप्तिरित्युक्तम्,सम्पत्तिश्च मरणम् । "वाङ् मनसि सम्पद्यते" इत्यारभ्य "तेजः परस्यां देवताया"मिति वचनात्तयोश्चावस्थयोः प्राज्ञप्राप्तिःसबोधत्वं च विद्यते, अतस्तयोरन्यतरापेक्षमिदं वचनम् । सुषुप्तिमरणयोर्नि सबोधत्वम् मुक्तस्य च सर्वज्ञत्वमाविष्कृतं हि श्रुत्या "नाह खल्वयं भगव एवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामी"ति सुषुप्तिवेलायां

१ प्रजस्यैव कस्मिन्देशे–इति क· मु पु ।
२ विद्यते इति पु पर्यंषि पाठ ।
३ न इ–इति प्र पु, नार्थमिति मु· द्वि म· पु च ।
४ प्रमय इति नास्ति पुस्तकेषु ।

निस्सम्बोधत्वमुक्त्वा तस्मिन्नेव वाक्ये मुक्तमधिकृत्य 'स वा एष दिव्येन चक्षुषा मनसैतान्कामान् पश्यन् रमते य एते ब्रह्मलोके" इति सर्वज्ञत्वमुच्यते, तथा "सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति च स्पष्टमेव सर्वज्ञत्वमुच्यते । तथा मरणे च निस्सम्बोधत्वम् "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती"त्युक्तम्, न पश्यतीत्यर्थः । अतः "प्राज्ञेनात्मने"ति वचनं स्वाप्ययसम्पत्त्योरन्यतरापेक्षम् ॥

अभावाधिकरणं समाप्तम् ॥ ५ ॥

अथ जगद्व्यापारवर्जाधिकरणम् ६।

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥१८॥

किं मुक्तस्यैश्वर्यं जगत्सृष्ट्यादि परमपुरुषासाधारणं सर्वेश्वरत्वमपि, उत तद्रहितं केवलपरमपुरुषानुभवविषयमिति संशयः । किं युक्तम् । जगदीश्वरत्वमपीति । कुतः । "निरञ्जनः परमं साम्यमुपैती"ति परमपुरुषेण परमसाम्यावगतेः, सत्यसङ्कल्पत्वश्रुतेश्च । न हि परमसाम्यस्य सङ्कल्पत्वं सर्वेश्वरासाधारणजगद्व्यापाररूपजगन्नियमनेन विनोपपद्यते । अतः सत्यसङ्कल्पत्वपरमसाम्योपपत्तये समस्तजगन्नियमनरूपमपि मुक्तैश्वर्यमित्येवं प्राप्ते प्रचक्ष्महे—

'जगद्व्यापारवर्ज'मिति । जगद्व्यापारो निखिलचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदनियमनम्, तद्वर्जं निरस्तनिखिलतिरोधानस्य निर्व्याजब्रह्मानुभवरूपं मुक्तस्यैश्वर्यम् । कुतः । 'प्रकरणात्' । निखिलजगन्नियमनं हि परं ब्रह्म प्रकृत्याम्नायते "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मे"ति । यद्येतन्निखिलजगन्नियमनं मुक्तानामपि साधारणं स्यात्, ततश्चेदं जगदीश्वरत्वरूपं ब्रह्मलक्षणं न सङ्गच्छते । असाधारणस्य हि लक्षणत्वम् । तथा "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजते"ति, "ब्रह्म वा इदमेकमेवाग्र आसीत्तदेकं सन्न व्यभवत्

तच्छ्रेयोरूपमत्यसृजत क्षत्रम् यान्येतानि देवत्राक्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान" इति, "आत्मा वा इदमेकमेव तत्राग्र आसीत् नान्यत्किञ्चन मिषत् स ऐक्षत लोकान् सृजा इति स इमाँल्लोकानसृजते"ति, "एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्यः स एकाकी न रमते तस्य ध्यानान्तस्थस्यैका कन्या दशेन्द्रियाणि"इत्यादिषु "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः"इत्यारभ्य"य आत्मनि तिष्ठ"न्नित्यादिषु च निखिलजगन्नियमनं परमपुरुषं प्रकृत्यैव श्रूयते। 'असन्निहितत्वाच्च,' न चैतेषु निखिलजगन्नियमनप्रसङ्गेषु मुक्तस्य संनिधानमस्ति, येन जगद्व्यापारस्तस्यापि स्यात्॥

**प्रत्यक्षोपदेशान्नेति चेन्नाधिकारि-**
**कमण्डलस्थोक्तेः॥ १८॥**

"स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति स इमाँल्लोकान्कामान्नी कामरूप्यनुसञ्चर"न्निति प्रत्यक्षश्रुत्या मुक्तस्य जगद्व्यापार उपदिश्यते। अतो न जगद्व्यापारवर्जमिति चेत्, न, 'आधिकारिकमण्डलस्थोक्तेः' आधिकारिकाः अधिकारेषु नियुक्ता हिरण्यगर्भादयः, मण्डलानि तेषां लोकाः, तत्स्था भोगा मुक्तस्याकर्मवश्यस्य भवन्तीत्ययमर्थः 'तस्य सर्वेषु लोकेषु कामचारो भवती'त्यादिनोच्यते। अकर्मवशित्वज्ञानो मुक्तोधिकारि[1]लोकान् ब्रह्मविभूतिभूताननुभूय यथाकामं तृप्यतीत्यर्थः। तदेव विकारान्तर्वर्तिन आधिकारिकमण्डलस्थान्सर्वान् भोगान् ब्रह्मविभूतिभूताननुभवतीत्यनेन वाक्येनोच्यते, न जगद्व्यापारः।

यदि संसारिवन्मुक्तोऽपि विकारान्तर्वर्तिनो भोगान् भुङ्क्ते, तर्हि बद्धस्येव मुक्तस्यापि अन्तवदेव भोग्यजातमल्पं च स्या,त्तत्राह—

**विकारावर्ति च तथा हि स्थितिमाह॥ १९॥**

विकारे जन्मादिके न वर्तत इति विकारावर्ति, निर्धूतनिखिल-

---

१ मुक्तोऽधिकारीति मु० पाठः।

विकारं निखिलहेयप्रत्यनीककल्याणैकतानं निरतिशयानन्दं परं ब्रह्म सविभूतिकं सकलकल्याणगुणमनुभवति मुक्तः, तद्विभूत्यन्तर्गतत्वेन विकारवर्तिनां लोकानामपि मुक्तभोग्यत्वम् । 'तथा हि' परस्मिन् ब्रह्मणि निर्विकारेऽनवधिकातिशयानन्दे मुक्तस्यानुभवितृत्वेन 'स्थितिमाह' श्रुतिः "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्ये ऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति" "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती"त्यादिका । तद्विभूतिभूतं जगत्तचैव वर्तते "तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चने"ति श्रुतेः । अतः सविभूतिकं ब्रह्मानुभवन् विकारान्तर्वर्तिनश्चाधिकारिकमण्डलस्यानपि भोगान् भुङ्क्त इति "सर्वेषु लोकेषु कामचार" इत्यादिनोच्यते, न मुक्तस्य जगद्व्यापारः ॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

अस्य प्रत्यगात्मनो मुक्तस्य नियाम्यभूतस्य नियन्तृभूतपरमपुरुषासाधारणं जगद्व्यापाररूपं नियमनं न सम्भवतीत्युक्तम् । निखिलजगन्नियमनरूपो व्यापारः परमपुरुषासाधारण इति 'दर्शयतः' श्रुतिस्मृती—

"भीषाऽस्माद्वातः पवते
भीषोदेति सूर्यः ।
भीषाऽस्मादग्निश्चेन्द्रश्च
मृत्युर्धावति पञ्चम" इति

"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादिः, तथा "एष सर्वेश्वरः एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाये"ति च श्रुतिः । स्मृतिरपि—

"मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥

"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग"दिति च । तथा मुक्तस्य सत्यसङ्कल्पत्वादिपूर्वकस्याप्यानन्दस्य परमपुरुष एव हेतुरिति श्रुतिस्मृती दर्शयतः—"एष ह्येवानन्दयाति"

"मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥
ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य चे"ति ।

यद्यप्यपहतपाप्मत्वादिः सत्यसङ्कल्पत्वपर्यन्तो गुणगणः प्रत्यगात्मनः स्वाभाविक एवाविर्भूतः, तथाऽपि तस्य तथाविधत्वमेव परमपुरुषायत्तम्, तस्य नित्य¹स्थितिश्च तदायत्ता, परमपुरुषस्यैतन्नित्यतया नित्येष्टत्वान्नित्यतया वर्तत इति न कश्चिद्विरोधः । एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रावगतस्य परमपुरुषस्य नित्येष्टत्वादेव तथाऽवस्थानमस्तीति शास्त्रादवगम्यते । अतो मुक्तस्य सत्यसङ्कल्पत्वं परमपुरुषसाम्यञ्च जगद्व्यापारवर्ज्जम् ॥

## भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

ब्रह्मयाथात्म्यानुभवरूपभोगमात्रेण मुक्तस्य ब्रह्मसाम्यप्रतिपादनाच्च लिङ्गात् जगद्व्यापारवर्ज्जमित्यवगम्यते 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते'ति । अतो मुक्तस्य परमपुरुषसाम्यं सत्यसङ्कल्पत्वञ्च परमपुरुषासाधारणनिखिलजगन्नियमनश्रुत्यानुगुण्येन वर्णनीयमिति जगद्व्यापारवर्ज्जमेव मुक्तैश्वर्यम् ।

यदि परमपुरुषायत्तमेव मुक्तस्यैश्वर्यम्, तर्हि तस्य स्वतन्त्रत्वेन तत्सङ्कल्पान्मुक्तस्य पुनरावृत्तिसम्भवमाशङ्क्यत्राह—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

यथा निखिलहेयप्रत्यनीककल्याणैकतानो जगज्जन्मादिकारणं समस्तवस्तुविलक्षणः सर्वज्ञः सत्यसङ्कल्पः आश्रितवात्सल्यैकजलधिः परम

१ नित्येति नास्ति द्वि पु ।

कारुणिको निरस्तसमस्ताभ्यधिकसम्भावनः परब्रह्माभिधानः परमपुरुषोऽस्तीति शास्त्रादवगम्यते, एवमहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीततदुपासनरूपतत्समाराधनप्रीतः उपासीनाननादिकालप्रवृत्तानन्तदुस्तरकर्मसञ्चयरूपाविद्यां विनिवर्त्य स्वयाथात्म्यानुभवरूपानवधिकातिशयानन्दं प्रापय्य पुनर्नावर्तयतीत्यपि शास्त्रादेवावगम्यते । शास्त्रं च "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते" इत्यादिकः । तथा च भगवता स्वयमेवोक्तम्—

"मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥
आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति ।

न चोच्छिन्नकर्मबन्धस्यासङ्कुचितज्ञानस्य परब्रह्मैकानुभवस्वभावस्य[1] तदेकविषयानवधिकातिशयानन्दं ब्रह्मानुभवतोऽन्यापेक्षा, तदर्थारम्भासम्भवात्[2] पुनरावृत्तिशङ्का । न च परमपुरुषः सत्यसङ्कल्पोऽत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति, स एवमाह—

"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ।
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः" इति ।

---

१ ०कानुभवैकस्वभावस्येति मु, ०कानुभवस्यैकस्वभावस्येति द्वि० पु० ।
२ तदर्थान्तरारम्भासम्भवादिति मु० प्र० पु० च पाठः ।

सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयतीति सर्वं समञ्जसम् ॥

जगद्व्यापारवर्जाधिकरणं समाप्तम् ॥ ६ ॥

इति श्रीमद्भगवद्रामानुजमुनिप्रणीते शारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः ॥ ४ ॥

## समाप्तश्च फलाध्यायश्चतुर्थः ।
## शास्त्रं च परिसमाप्तम् ॥

"तस्मै रामानुजार्याय नमः परमयोगिने ।
यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ॥"

॥ हरिः ॐ तत्सत् हरिः ॐ तत्सत् हरिः ॐ तत्सत् ॥

